तत्र यः किमप्यसंचिन्त्योत्पन्नमर्थमपव्येति स तादात्विकः । यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः । यो भृत्यात्मपीडाभ्यामर्थं संचिनोति न तु क्वचिदपि व्ययते स कदर्यः । तादात्विकमूलहरयोरायत्यां नास्ति कल्याणं, किं त्वर्थभ्रंशेन धर्मकामयोर्विनाश एव । कदर्यस्य त्वर्थसंग्रहो राजदायादतस्कराणामन्यतमस्य निधिः, न तु धर्मकामयोर्हेतुः । अत एतत्पुरुषत्रयप्रकृतिपरिहारेण मतिमतार्थो ऽनुशीलनीयः । तथा नाजितेन्द्रियस्य क्वापि कार्यसिद्धिरस्ति । न कामासक्तस्य समस्ति चिकित्सितम् । न तस्य धनं धर्मः शरीरं वा यस्य स्त्रीष्वत्यन्तासक्तिर्विरुद्धकामवृत्तिर्न चिरं नन्दति । अतो धर्मार्थाबाधनेन कामे प्रवर्तितव्यमिति पर्यालोच्य परस्पराविरोधेन धर्मार्थकामासेवनमुपदिष्टमिति ।

तथा ।

**अन्यतरबाधासंभवे मूलाबाधा ॥ ५४ ॥**

इति ॥ अमीषां धर्मार्थकामानां मध्ये ऽन्यतरस्योत्तरोत्तरलक्षणस्य पुरुषार्थस्य बाधासंभवे कुतो ऽपि विषमप्रघट्टकवशान्निरोधे संपद्यमाने सति । किं कर्तव्यमित्याह "मूलाबाधा" । यो यस्य पुरुषार्थस्य धर्मार्थकामास्त्रिवर्ग इति क्रमसंपेक्ष्य मूलमादिमस्तस्याबाधापीडनम् । तत्र कामलक्षणपुरुषार्थबाधायां धर्मार्थयोर्बाधा रक्षणीया, तयोः सतोः

कामस्य सुकरोत्पादकत्वात्; कामार्थयोस्तु बाधायां धर्म एव रक्षणीयः, धर्ममूलत्वादर्थकामयोः। अत एवोक्तम्।

धर्मश्चेन्नावसीदेत कपालेनापि जीवतः।
आढ्योऽस्मीत्यवगन्तव्यं धर्मवित्ता हि साधवः ॥१॥ इति।

तथा।

## बलाबलापेक्षणम् ॥ ५५ ॥

इति ॥ इह बुद्धिमता मनुजेन सर्वेष्वपि कार्येषु प्रवृत्तिमादधता सता बलस्य द्रव्यक्षेत्रकालभावकृतस्यात्मसामर्थ्यस्याबलस्य च तद्विलक्षणस्यापेक्षणमालोचनमङ्गीकर्तव्यम्। अयथाबलमारम्भस्य क्षयसंपदेकनिमित्तत्वात्। अत एव पठ्यते।

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ।
कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥१॥

तथा।

## अनुबन्धे प्रयत्नः ॥ ५६ ॥

इति ॥ अनुबन्धे उत्तरोत्तरवृद्धिरूपे धर्मार्थकामानां प्रयत्नो यत्नातिरेकः कार्यः। अनुबन्धशून्यानि हि प्रयोजनानि बन्ध्या स्त्रिय इव न किंचिद्गौरवं लभन्ते, अपि तु हीलामेवेति ॥

तथा।

## कालोचितापेक्षा ॥ ५७ ॥

इति ॥ यद्यत्र काले वस्तु हातुमुपादातुं वोचितं भवति,

तस्यात्यन्तनिपुणबुद्ध्या पर्यालोच्यापेक्षाङ्गीकारः कर्तव्यः, इच-लक्षणत्वेनास्याः सकलश्रीसमधिगमहेतुत्वात् । अत एव पठ्यते ।

यः काकणीमप्यपथप्रपन्नामन्वेषते निष्कसहस्रतुल्याम् ।
कालेन कोटिष्वपि मुक्तहस्तस्तस्यानुबन्धं न जहाति लक्ष्मीः ॥ १ ॥

"मुक्तहस्तः" इति मुत्कलहस्तः ॥

तथा ।

## प्रत्यहं धर्मश्रवणम् ॥ ५८ ॥

इति ॥ प्रत्यहं प्रतिदिवसं धर्मस्यैहैव शास्त्रे वक्तुं प्रस्तावितस्य कान्तकान्तासमेतयुवजनकिन्नरारब्धगीतावर्णनोदाहरणेन श्रवणमाकर्णनं, धर्मशास्त्रश्रवणस्यात्यन्तगुणहेतुत्वात् । पठ्यते च ।

क्लान्तमुपोज्झति खेदं तप्तं निर्वाति बुध्यते मूढम् ।
स्थिरतामेति व्याकुलमुपयुक्तसुभाषितं चेतः ॥ १ ॥ इति ॥

तथा ।

## सर्वत्रानभिनिवेशः ॥ ५९ ॥

इति ॥ सर्वत्र कार्ये प्रवर्तमानेन बुद्धिमतानभिनिवेशोऽभिनिवेशपरिहारः कार्यः । नीतिमार्गमनागतस्यापि पराभिभवपरिणामेन कार्यस्यारम्भोऽभिनिवेशः । नीचलक्षणं चेदं यन्नीतिमतीतस्यापि कार्यस्य चिकीर्षणम् । पठन्ति च ।

दर्पः श्रमयति नीचान्निष्फलनयविगुणदुष्करारम्भैः ।
स्रोतोविलोमतरणैर्व्यसनिभिरायास्यते मत्स्यैः ॥ १ ॥

तथा ।

## गुणपक्षपातिता ॥ ६० ॥

इति ॥ गुणेषु दाक्षिण्यसौजन्यौदार्यस्थैर्यप्रियपूर्वाभाषणादिषु स्वपरयोरुपकारकारणेष्वात्मधर्मेषु पक्षपातिता बहुमानं तत्प्रशंसासाहाय्यकारणादिनानुकूला प्रवृत्तिः। गुणपक्षपातिनो हि जीवा बहुमानदोषोपजातावन्ध्यपुण्यप्रबन्धसामर्थ्यान्नियमादिहामुत्र च शरच्छशधरकरनिकरगौरं गुणग्राममवश्यमवाप्नुवन्ति, तद्बहुमानाशयस्य चिन्तारत्नादप्यधिकशक्तियुक्तत्वात्।

तथा।

## ऊहापोहादियोग इति ॥ ६१ ॥

इति ॥ ऊहस्यापोहस्य, आदिशब्दात्तत्त्वाभिनिवेशलक्षणो बुद्धिगुणः। शुश्रूषाश्रवणग्रहणधारणाविज्ञानानि च गृह्यन्ते इत्यष्टौ बुद्धिगुणाः। तत ऊहापोहादिभिर्योगः समागमोऽनुष्ठेय इति। तत्र प्रथमतस्तावच्छ्रोतुमिच्छा शुश्रूषा; श्रवणमाकर्णनं; ग्रहणं शास्त्रार्थोपादानं; धारणाविस्मरणं; मोहसंदेहविपर्यासव्युदासेन ज्ञानं विज्ञानं; विज्ञातमर्थमवलम्ब्यान्येषु व्याप्त्या तथाविधेषु वितर्कणमूहः; उक्तियुक्तिभ्यां विरुद्धादर्थाद्धिंसादिकात्प्रत्यवायसंभावनया व्यावर्तनमपोहः। अथवा सामान्यज्ञानमूहो विशेषज्ञानमपोहः। विज्ञानोहापोहविशुद्धमिदमित्थमेवेति निश्चयस्तत्त्वाभिनिवेशः। एवं हि शुश्रूषादिभिर्बुद्धिगुणैरुपहितप्रज्ञाप्रकर्षः पुमान्न कदाचिदकल्याणमाप्नोति। यदुच्यते।

जीवन्ति शतशः प्राज्ञाः प्रज्ञया वित्तसंक्षये ।
न हि प्रज्ञाक्षये कश्चिद्वित्ते सत्यपि जीवति ॥१॥ इति ।

इतिशब्दः प्रस्तुतस्य सामान्यतो गृहस्थधर्मस्य परिसमाप्त्यर्थ इति ॥ इत्थं सामान्यतो गृहस्थधर्म उक्तः ॥

अथास्यैव फलमाह ।

**एवं स्वधर्मसंयुक्तं सद्गार्हस्थ्यं करोति यः ।**
**लोकद्वये ऽप्यसौ धीमान्सुखमाप्नोत्यनिन्दितम् ॥ ६२ ॥**

इति ॥ एवमुक्तन्यायेन यः स्वधर्मः गृहस्थानां संबन्धी धर्मः, तेन संयुक्तं समन्वितम् । अत एव सत्सुन्दरं गार्हस्थ्यं गृहस्थभावं करोति विदधाति यः कश्चित्पुण्यसंपन्नो जीवो लोकद्वये ऽपीहलोकपरलोकरूपे किं पुनरिहलोक एवेत्यपिशब्दार्थः । असौ सद्गार्हस्थ्यकर्ता धीमान् प्रशस्तबुद्धिः सुखं शर्म आप्नोति लभते । अनिन्दितं शुभानुबन्धितया सुधियामगर्हणीयमिति । यत एवं, ततो ऽत्रैव यत्नो विधेय इति श्लोकद्वयेन दर्शयन्नाह ।

**दुर्लभं प्राप्य मानुष्यं विधेयं हितमात्मनः ।**
**करोत्यकाण्ड एवेह मृत्युः सर्वं न किंचन ॥ ६३ ॥**
**सत्येतस्मिन्नसारासु संपत्स्वविहिताग्रहः ।**
**पर्यन्तदारुणासूच्चैर्धर्मः कार्यो महात्मभिः ॥ ६४ ॥**

इति ॥ दुर्लभं दुरापं प्राप्य समासाद्य मानुष्यं जन्म ।

किमित्याह "विधेयं" अनुष्ठेयं सर्वावस्थासु "हितं" अनुकूलं कल्याणमित्रयोगादि "आत्मनः" स्वस्य। यतः। "करोत्यकाण्ड एव" मरणानवसर एव बाल्ययौवनमध्यमवयोवस्थारूपे "इह" मर्त्यलोके "सर्वं" पुत्रकलत्रविभवादि "मृत्युः" यमः "न किंचन" मरणत्राणाकारणत्वेनावस्तुरूपमिति। "सति" विद्यमाने जगत्त्रितयवर्तिजन्तुजनितोपरमे "एतस्मिन्" मृत्यावेव "असारासु" मृत्युनिवारणं प्रत्यक्षमासु "संपत्सु" धनधान्यादिसंपत्तिलक्षणासु "अविहिताग्रहः" अकृतमूर्च्छः। कीदृशीषु संपत्स्वित्याह "पर्यन्तदारुणासु" विरामसमयसमर्पितानेकव्यसनशतासु "उच्चैः" अत्यर्थं "धर्मः" उक्तलक्षणः "कार्यः" विधेयः। कैरित्याह "महात्मभिः" महान्प्रशस्य आत्मा येषां ते तथा, तैरिति।

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुप्रकरणविवृत्तौ सामान्यतो गृहस्थधर्मविधिः प्रथमोऽध्यायः॥ १॥

# द्वितीयो ऽध्यायः ।

व्याख्यातः प्रथमोऽध्यायः । सांप्रतं द्वितीयो व्याख्यायते । विशेषसंबन्धश्चास्य स्वयमेव शास्त्रकृता भणिष्यत इति नेह दर्श्यते । एवमन्येष्वप्यध्यायेष्विति । तस्य चेदमादिसूत्रम् ।

**प्रायः सद्धर्मबीजानि गृहिष्वेवंविधेष्वलम् ।**
**रोहन्ति विधिनोप्तानि यथा बीजानि सत्क्षितौ ॥ १ ॥**

इति ॥ प्रायो बाहुल्येन सद्धर्मबीजानि सद्धर्मस्य सम्यग्ज्ञानदर्शनचारित्ररूपस्य बीजानि कारणानि । तानि चामूनि ।

दुःखितेषु दयात्यन्तमद्वेषो गुणवत्सु च ।
औचित्यासेवनं चैव सर्वत्रैवाविशेषतः ॥ १ ॥ इति ।

गृहिषु गृहस्थेषु । एवंविधेषु कुलक्रमागतानिन्द्यन्यायानुष्ठानादिगुणभाजनेषु । अलं स्वफलावन्ध्यकारणत्वेनात्यर्थं रोहन्ति धर्मचिन्तादिलक्षणाङ्कुरादिमन्ति जायन्ते । उक्तं च ।

वपनं धर्मबीजस्य सत्प्रशंसादि तद्गतम् ।
तच्चिन्ताद्यङ्कुरादि स्यात्फलसिद्धिस्तु निर्वृतिः ॥ १ ॥
चिन्तासच्छ्रुत्यनुष्ठानदेवमानुषसंपदः ।
क्रमेणाङ्कुरसत्काण्डनालपुष्पसमा मताः ॥ १ ॥

कीदृशानि सन्ति रोहन्तीत्याह "विधिना" देशनार्हबालादिपुरुषौचित्यलक्षणेन "उप्तानि" निक्षिप्तानि । "यथा"

इति दृष्टान्तार्थः । बीजानि शालिगोधूमादीनि "सत्क्षितौ" अनुपहतभूमौ विधिनोप्तानि सन्ति "प्रायो"-ग्रहणादकस्मादेव पक्के तथाभव्यत्वे क्वचिन्मरुदेव्यादावन्यथाभावेऽपि न विरोध इति ॥

अमुमेवार्थं व्यतिरेकत आह ।

**बीजनाशो यथाभूमौ प्ररोहो वेह निष्फलः ।**
**तथा सद्धर्मबीजानामपात्रेषु विदुर्बुधाः ॥ २ ॥**

इति ॥ बीजनाशो बीजोच्छेदः । यथा अभूमौ ऊषरादिरूपायां प्ररोहोऽङ्कुराद्युद्भेदो बीजस्यैव । "वा" इति पक्षान्तरसूचकः । इह जगति निष्फलो धान्यादिनिष्पत्तिलक्षणफलविकलः । तथा सद्धर्मबीजानामुक्तलक्षणानां गुरुणानाभोगादिभिर्निक्षिप्यमाणानामपात्रेष्वनीतिकारिषु[1] लोकेषु विदुर्जानते बुधा नाशं निष्फलं वा प्ररोहमिति ॥

आह[2] किमित्यपात्रेषु धर्मबीजनाशो निष्फलो वा प्ररोहः संपद्यत इत्याह ।

**न साधयति यः सम्यगज्ञः स्वल्पं चिकीर्षितम् ।**
**[3]अयोग्यत्वात्कथं मूढः स महत्साधयिष्यति ॥ ३ ॥**

इति ॥ न नैव साधयति निर्वर्तयति यो जीवः सम्यग्य-

१ P ०कारेषु    २ P omits.
३ B omits from here down to चिकीर्षितं of the commentary.

यावदज्ञो हिताहितविभागाकुशलः स्वल्पं तुच्छं चिकीर्षितं कर्तुमिष्टं निर्वाहाद्यनुष्ठानाद्यपि । कस्मान्न साधयतीत्याह "अयोग्यत्वात्" अज्ञत्वेनानधिकारित्वात् । यथोक्तं "मूर्खस्य क्वचिदर्थे नाधिकारः" इति । कथं केन प्रकारेण मूढो वैचित्र्यमागतः स पूर्वोक्तो जीवः । स महत्परमपुरुषार्थहेतुतया वृहद्धर्मबीजारोहणादि साधयिष्यति, सर्षपमात्रधारणासमर्थस्य मेरुगिरिधारणासमर्थत्वादिति ॥

**इति सद्धर्मदेशनार्ह उक्तः ॥ इदानीं तद्विधिमनुवर्तयिष्यामः ॥ ४ ॥**

इति ॥ इत्येवं पूर्वोक्तगृहस्थधर्मनिरूपणेन सद्धर्मदेशनार्हो लोकोत्तरधर्मप्रज्ञापनायोग्य उक्तो भणितः । इदानीं संप्रति तद्विधिं सद्धर्मदेशनाक्रमं वर्णयिष्यामो निरूपयिष्यामो वयमिति ॥

तद्यथा ।

**तत्प्रकृतिदेवताधिमुक्तिज्ञानम् ॥ ५ ॥**

इति ॥ तस्य सद्धर्मदेशनार्हस्य जन्तोः प्रकृतिः स्वरूपं गुणवल्लोकसङ्गप्रियत्वादिका देवताधिमुक्तिश्च, बुद्धकपिलादिदेवताविशेषभक्तिः, तयोर्ज्ञानं प्रथमतो देशकेन कार्यम् । ज्ञातप्रकृतिको हि पुमान् रक्तो द्विष्टो मूढः पूर्वव्युद्ग्राहितश्च चेन्न भवति, तदा कुशलैस्तथातथानुवर्त्य लोकोत्तरगुणपात्र-

तामानीयते; विदितदेवताविशेषाधिमुक्तिश्च तत्तद्देवताप्रणीतमार्गानुसारिवचनोपदर्शनेन तद्दूषणेन च सुखमेव मार्गेऽवतारयितुं शक्यत इति ॥

तथा ।

## साधारणगुणप्रशंसा ॥ ६ ॥

इति ॥ साधारणानां लोकलोकोत्तरयोः सामान्यानां गुणानां प्रशंसा पुरस्कारो देशनार्हस्याग्रतो विधेया । यथा ।

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्या निरभिभवसाराः परकथाः
श्रुते चासंतोषः कथमनभिजाते निवसति ॥१॥

तथा ।

## सम्यक्तदधिकाख्यानम् ॥ ७ ॥

इति । सम्यगविपरीतरूपतया तेभ्यः साधारणगुणेभ्योऽधिका विशेषवन्तो ये गुणाः, तेषामाख्यानं कथनम् । यथा ।

पञ्चैतानि पवित्राणि सर्वेषां धर्मचारिणाम् ।
अहिंसा सत्यमस्तेयं त्यागो मैथुनवर्जनम् ॥१॥ इति ॥

तथा ।

## अबोधेऽप्यनिन्दा ॥ ८ ॥

इति । अबोधेऽप्यनवगमेऽपि सामान्यगुणानां विशेषगुणानां वा व्याख्यातानामप्यनिन्दा "अहो मन्दबुद्धिर्भवान्

य इत्थमाचक्षाणेष्वप्यस्मासु न बुध्यते वस्तुतत्त्वं" इत्येवं श्रोतुस्तिरस्कारपरिहाररूपा। निन्दितो हि श्रोता किंचिद्बुभुत्सुरपि मन् दूरं विरज्यत इति॥

तर्हि किं कर्तव्यमित्याह।

शुश्रूषाभावकारणम्॥९॥

इति॥ धर्मशास्त्रं प्रति श्रोतुमिच्छा शुश्रूषा, तल्लक्षणो भावः परिणामः, तस्य कारणं निर्वर्तनं श्रोतुस्तैस्तैर्वचनैरिति शुश्रूषामनुत्पाद्य धर्मकथने प्रत्युतानर्थसंभवः। पठ्यते च। स खलु पिशाचको वातकी वा यः परे ऽनर्थिनि वाचमुदीरयति॥

तथा।

भूयो भूय उपदेशः॥१०॥

इति॥ भूयो भूयः पुनः पुनः। उपदिश्यत इत्युपदेश उपदेष्टुमिष्टवस्तुविषयः कथंचिदनवगमे सति कार्यः। किं न क्रियते दृढमंनिपाते रोगिणां पुनः पुनः क्रियातिक्तादिक्वाथपानोपचार इति।

तथा।

बोधे प्रज्ञोपवर्णनम्॥११॥

इति॥ बोधे सकृदुपदेशेन भूयो भूय उपदेशेन चोपदिष्टवस्तुनः परिज्ञाने; तस्य श्रोतुः प्रज्ञोपवर्णनं बुद्धिप्रशंसनं, यथा "नालघुकर्माणः प्राणिन एवंविधसूक्ष्मार्थबोद्धारो भवन्ति" इति॥

तथा ।

## तत्त्वावतारः ॥ १२ ॥

इति ॥ तत्त्वे आगमेऽवतारः प्रवेश आगमबहुमानोत्पादनद्वारेण तस्य विधेयः । आगमबहुमानश्चैवमुत्पादनीयः ।

परलोकविधौ शास्त्रात्प्रायो नान्यदपेक्षते ।
आसन्नभव्यो मतिमान् श्रद्धाधनसमन्वितः ॥ १ ॥
उपदेशं विनाप्यर्थकामौ प्रति पटुर्जनः ।
धर्मस्तु न विना शास्त्रादिति तत्रादरो हितः ॥ २ ॥
अर्थादावविधानेऽपि तदभावः परं नृणाम् ।
धर्मो विधानतोऽनर्थः क्रियोदाहरणात्परः ॥ ३ ॥
तस्मात्सदैव धर्मार्थी शास्त्रयत्नः प्रशस्यते ।
लोके मोहान्धकारेऽस्मिन् शास्त्रालोकः प्रवर्तकः ॥ ४ ॥

"शास्त्रयत्नः" इति शास्त्रे यत्नो यस्येति समासः ।

पापामयौषधं शास्त्रं शास्त्रं पुण्यनिबन्धनम् ।
चक्षुः सर्वत्रगं शास्त्रं शास्त्रं सर्वार्थसाधनम् ॥ ५ ॥
न यस्य भक्तिरेतस्मिंस्तस्य धर्मक्रियापि हि ।
अन्धप्रेक्ष्यक्रियातुल्या कर्मदोषादसत्फला ॥ ६ ॥
यः श्राद्धो मन्यते मान्यानहङ्कारविवर्जितः ।
गुणरागी महाभागस्तस्य धर्मक्रिया परा ॥ ७ ॥
यस्य त्वनादरः शास्त्रे तस्य श्रद्धादयो गुणाः ।
उन्मत्तगुणतुल्यत्वान्न प्रशंसास्पदं सताम् ॥ ८ ॥

मलिनस्य यथात्यन्तं जलं वस्त्रस्य शोधनम् ।
अन्तःकरणरत्नस्य तथा शास्त्रं विदुर्बुधाः ॥९॥
शास्त्रे भक्तिर्जगद्वन्द्यैर्मुक्तेर्दूती परोदिता ।
अत्रैवेयमतो व्याख्या तत्प्राप्त्यासन्नभावतः ॥१०॥

"अत्रैव" इति मुक्तौ, "एवेयं" इति शास्त्रभक्तिः, "तत्प्राप्त्यासन्नभावतः" इति मुक्तिप्राप्तिसमीपभावादिति ॥

तथा ।

## प्रयोग आक्षेपण्याः ॥ १३ ॥

इति ॥ प्रयोगो व्यापारणं धर्मकथाकाले । आक्षिप्यन्त आकृष्यन्ते मोहात्तत्त्वं प्रति भव्यप्राणिनोऽनयेत्याक्षेपणी तस्याः कथायाः । सा चाचारव्यवहारप्रज्ञप्तिदृष्टिवादभेदाच्चतुर्धा । तत्राचारो लोचास्नानादिसाधुक्रियारूपः, व्यवहारः कथंचिदापन्नदोषव्यपोहाय प्रायश्चित्तलक्षणः, प्रज्ञप्तिः संशयापन्नस्य मधुरवचनैः प्रज्ञापनं, दृष्टिवादस्तु श्रोत्रपेक्षया सूक्ष्मजीवादिभावकथनमिति ॥

तथा ।

## ज्ञानाद्याचारकथनम् ॥ १४ ॥

इति ॥ ज्ञानस्य श्रुतलक्षणस्याचारो ज्ञानाचारः, आदिशब्दाद्दर्शनाचारश्चारित्राचारस्तपआचारो वीर्याचारश्चेति । ततो ज्ञानाद्याचाराणां कथनं प्रज्ञापनमिति समासः । तत्र ज्ञानाचारोऽष्टधा, कालविनयबहुमानोपधानानिह्नवव्यञ्ज-

नार्थतदुभयभेदलक्षणः। तत्र काल इति यो यस्याङ्गप्रविष्टादेः श्रुतस्य काल उक्तस्तस्मिन्नेव तस्य स्वाध्यायः कर्तव्यः, नान्यदा, तीर्थकरवचनात्। दृष्टं च कृष्यादेः कालकरणे फलं विपर्यये तु विपर्यय इति। तथा श्रुतग्रहणं कुर्वता गुरोर्विनयः कार्यः। विनयो ह्यभ्युत्थानपादधावनादिः, अविनयगृहीतं हि तदफलं भवति। तथा श्रुतग्रहणोद्यतेन गुरोर्बहुमानः कार्यः। बहुमानो नामान्तरो भावप्रतिबन्धः। एतस्मिन्सत्याक्षेपणाविफलं श्रुतं भवति। अत्र च विनयबहुमानयोश्चतुर्भङ्गी भवति। एकस्य विनयो न बहुमानः, अपरस्य बहुमानो न विनयः, अन्यस्य विनयोऽपि बहुमानोऽपि, अन्यतरस्य न विनयो नापि बहुमान इति। तथा श्रुतग्रहणप्रवृत्तेन तत्फलमभीप्सतोपधानं[1] कार्यम्। उपदधाति पुष्णाति श्रुतमित्युपधानं तपः। तद्धि यद्यत्राध्ययन आगाढादियोगलक्षणमुक्तं तत्तत्र कार्यं, तत्पूर्वश्रुतग्रहणस्यैव सफलत्वात्। अनिह्नव इति गृहीतश्रुतेनानिह्नवः कार्यः। यद्यत्सकाशेऽधीतं तत्र स एव कथनीयो नान्यः, चित्तकालुष्यापत्तेरिति। तथा श्रुतग्रहणप्रवृत्तेन तत्फलमभीप्सता व्यञ्जनभेदोऽर्थभेद उभयभेदश्च न कार्यः। तत्र व्यञ्जनभेदो यथा "धम्मो मङ्गलमुक्किट्ठं" इति वक्तव्ये, "पुण्णो कल्लाणंउक्कोसं" इत्याह। अर्थभेदस्तु यथा। "आवन्तीके यावन्ती लोगंसि विप्परामसन्ति" इत्यत्राचारसूत्रे यावन्तः केचन लोकेऽस्मिन् पाषण्डिलोके "विपरामृशन्ति" इत्यर्थाभिधाने आवन्तीजनपदे

१ D P श्रुतग्रहणमभीप्सतोपधानं।

केया रज्जूवन्तो लोको विपरामृशति कूप इत्याह । उभयभेदस्तु द्वयोरपि याथात्म्योपमर्दे यथा "धर्मो मङ्गलमुत्कृष्टं, अहिंसा पर्वतमस्तके" इत्यादि । दोषश्चात्र व्यञ्जनभेदे ऽर्थभेदः, तद्भेदे क्रियायाः, क्रियाभेदे च मोक्षाभावः, तदभावे च निरर्थका दीक्षेति ॥

दर्शनाचारोऽपि निःशङ्कित-१-निःकाङ्क्षित-२-निर्विचिकित्सा-३-अमूढदृष्टि-४-उपबृंहा-५-स्थिरीकरण-६-वात्सल्य-७-तीर्थप्रभावना-८-भेदादष्टधैव । तत्र निःशङ्कित इति शङ्कनं शङ्कितं निर्गतं शङ्कितं यतोऽसौ निःशङ्कितः । देशसर्वशङ्कारहित इत्यर्थः । तत्र देशशङ्का । समाने जीवत्वे कथमेको भव्योऽपरस्त्वभव्य इति शङ्कते । सर्वशङ्का तु प्राकृतनिबद्धत्वात्सकलमेवेदं परिकल्पितं भविष्यतीति न पुनरालोचयति यथा भावा हेतुग्राह्या अहेतुग्राह्याश्च । तत्र हेतुग्राह्या जीवास्तित्वादयः, अहेतुग्राह्या भव्यत्वादयोऽस्मदाद्यपेक्षया प्रकृष्टज्ञानगोचरत्वात्तद्धेतूनामिति । प्राकृतनिबन्धोऽपि बालादिसाधारण इति । उक्तं च ।

बालस्त्रीमूढमूर्खाणां नृणां चारित्रकाङ्क्षिणाम् ।
अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः स्मृतः ॥

दृष्टेष्टाविरुद्धत्वाच्च नायं परिकल्पनागोचरः । ततश्च निःशङ्कितो जीव एवार्हच्छासनप्रतिपन्नो दर्शनाचार इत्युच्यते । अनेन दर्शनदर्शनिनोरभेदोपचारमाह । तदेकान्तभेदे त्वन्यदर्शनिन इव फलाभावान्मोक्षाभाव इत्येवं शेषपदेष्वपि भावना कार्या ॥ तथा निःकाङ्क्षितो देशसर्वकाङ्क्षारहितः । तत्र देश-

काङ्क्षा एकं दर्शनं काङ्क्षते दिगम्बरदर्शनादि, सर्वकाङ्क्षा तु सर्वाण्येवेति नालोकयति षड्जीवनिकायपीडामसत्प्ररूपणां चेति ॥ विचिकित्सा मतिविभ्रमः । निर्गता विचिकित्सा यस्मादसौ निर्विचिकित्सः, साध्वेव जिनदर्शनं किं तु प्रवृत्तस्यापि सतो ममास्मात्फलं भविष्यति वा न वा कृषीबलादिक्रियासूभयथाप्युपलब्धेरिति कुविकल्परहितः । न ह्यविकल उपाय उपेयवस्तुपरिप्रापको न भवतीति संजातनिश्चय इत्यर्थः । यद्वा निर्विजुगुप्सः साधुजुगुप्सारहितः ॥ तथामूढदृष्टिः । बालतपस्वितपोविद्यातिशयैर्न मूढा स्वभावान्न चलिता दृष्टिः सम्यग्दर्शनरूपा यस्यासावमूढदृष्टिः । एतावान् गुणिप्रधानो दर्शनाचारनिर्देशः ॥ अधुना गुणप्रधानः । उपबृंहणं नाम समानधार्मिकाणां सद्गुणप्रशंसनेन तद्वृद्धिकरणं; स्थिरीकरणं धर्माद्विषीदतां तत्रैव स्थापनं; वात्सल्यं समानधार्मिकजनोपकारकरणं; प्रभावना धर्मकथाभिस्तीर्थख्यापनेति । गुणप्रधानश्चायं निर्देशो गुणगुणिनोः कथंचिद्भेदख्यापनार्थम् । एकान्ताभेदे गुणनिवृत्तौ गुणिनोऽपि निवृत्तेः शून्यतापत्तिरिति ॥

चारित्राचारोऽष्टधा, पञ्चसमितित्रिगुप्तिभेदात् । समितिगुप्तिस्वरूपं च प्रतीतमेव ॥

तपआचारस्तु द्वादशविधः, बाह्याभ्यन्तरतपःषट्कद्वयभेदात् । तत्र

अनशनमूनोदरता वृत्तेः संक्षेपणं रसत्यागः ।
कायक्लेशः संलीनतेति बाह्यं तपः प्रोक्तम् ॥१॥

प्रायश्चित्तध्याने वैयावृत्त्यविनयावथोत्सर्गः ।
स्वाध्याय इति तपः षट्प्रकारमाभ्यन्तरं भवति ॥२॥

वीर्याचारः पुनरनिह्नुतबाह्याभ्यन्तरसामर्थ्यस्य सतो ऽनन्तरोक्तषट्त्रिंशद्विधे ज्ञानदर्शनाद्याचारे यथाशक्ति प्रतिपत्तिलक्षणं पराक्रमणं प्रतिपत्तौ च यथाबलं पालनेति ॥

तथा ।

## निरीहशक्यपालना ॥ १५ ॥

इति ॥ निरीहेणैहिकपारलौकिकफलेषु राज्यदेवत्वादिलक्षणेषु व्यावृत्ताभिलाषेण शक्यस्य ज्ञानाचारादेर्विहितमिदमिति बुद्ध्या पालना कार्येति च कथ्यत इति ॥

तथा ।

## अशक्ये भावप्रतिपत्तिः ॥ १६ ॥

इति । अशक्ये ज्ञानाचारादिविशेष एव कर्तुमपार्यमाण कुतोऽपि धृतिसंहननकालबलादिवैकल्यात् । भावप्रतिपत्तिर्भावेनान्तःकरणेन प्रतिपत्तिरनुबन्धः । न पुनस्तत्र प्रवृत्तिरपि, अकालौत्सुक्यस्य तत्त्वत आर्तध्यानत्वादिति ॥

तथा ।

## पालनोपायोपदेशः ॥ १७ ॥

इति ॥ एतस्मिन् ज्ञानाद्याचारे¹ प्रतिपन्ने सति पालनायोपायस्याधिकगुणतुल्यगुणलोकमध्यसंवासलक्षणस्य निजगुण

¹ B P ज्ञानाचारे

स्थानकोचितक्रियापरिपालनानुस्मरणस्वभावस्य वोपदेशो दातव्य इति ॥

तथा ।

## फलप्ररूपणा ॥ १८ ॥

इति ॥ अस्याचारस्य सम्यक्परिपालितस्य सतः फलमिहैव तावदुपप्लवह्रासो भावैश्वर्यवृद्धिर्जनप्रियत्वं च परत्र च सुगतिजन्मोत्तमस्थानलाभः परंपरया निर्वाणावाप्तिश्चेति यत्कार्यं तस्य प्ररूपणा प्रज्ञापना विधेयेति ॥

अत्रैव विशेषमाह ।

## देवर्द्धिवर्णनम् ॥ १९ ॥

इति ॥ देवानां वैमानिकानामृद्धेर्विभूते रूपादिलक्षणाया वर्णनं प्रकाशनम् । यथा "तत्रोत्तमा रूपसंपत्सत्स्थितिप्रभावसुखद्युतिलेश्यायोगो विशुद्धेन्द्रियावधित्वं प्रकृष्टानि भोगसाधनानि दिव्यो विमाननिवहः[1]" इत्यादिवक्ष्यमाणमेव ॥

तथा ।

## सुकुलागमनोक्तिः ॥ २० ॥

इति ॥ देवस्थानाच्युतावपि "विशिष्टे देशे विशिष्टे कुले निष्कलङ्केऽन्वय' उदग्रे सदाचारेणाख्यायिकापुरुषयुक्तेऽनेकमनोरथापूरकमत्यन्तनिरवद्यं जन्म[2]" इत्यादिवक्ष्यमाणलक्षणैवोक्तिः ॥

१ Comp. VII, 11. Comp. VII, 12.

तथा ।

## कल्याणपरंपराख्यानम् ॥ २१ ॥

इति ॥ ततः सुकुलागमनादनन्तरं कल्याणपरंपरायाः "तच्च सुन्दरं रूपमालयो लक्षणानां रहितमामयेन[1]" इत्यादिरूपाया अत्रैव धर्मफलाध्याये वक्ष्यमाणाया आख्यानं निवेदनं कार्यमिति ॥

तथा ।

## असदाचारगर्हा ॥ २२ ॥

इति ॥ असदाचारः सदाचारविलक्षणो हिंसानृतादिर्दशविधः पापहेतुभेदरूपः । यथोक्तम् ।

हिंसानृतादयः पञ्च तत्त्वाश्रद्धानमेव च ।
क्रोधादयश्च चत्वार इति पापस्य हेतवः ॥१॥

तस्य गर्हासदाचारगर्हा । यथा ।

न मिथ्यात्वसमः शत्रुर्न मिथ्यात्वसमं विषम् ।
न मिथ्यात्वसमो रोगो न मिथ्यात्वसमं तमः ॥२॥
द्विषद्विषतमोरोगैर्दुःखमेकत्र जायते[2] ।
मिथ्यात्वेन दुरन्तेन जन्तोर्जन्मनि जन्मनि ॥३॥
वरं ज्वालाकुले क्षिप्तो देहिनात्मा हुताशने ।
न तु मिथ्यात्वसंयुक्तं जीवितव्यं कदाचन ॥४॥

इति तत्त्वाश्रद्धानगर्हा । एवं हिंसादिष्वपि गर्हायोजना कार्या ॥

---

१ Comp. VII, 13. २ D P दीयते ।

तथा ।

**तत्स्वरूपकथनम् ॥ २३ ॥**

इति ॥ तस्यासदाचारस्य हिंसादेः स्वरूपकथनं यथा "प्रमत्तयोगात्प्राणिव्यपरोपणं हिंसा", "असदभिधानं मृषा", "अदत्तादानं स्तेयं", "मैथुनमब्रह्म", "मूर्छा परिग्रहः" इत्यादि ॥

तथा ।

**स्वयं परिहारः ॥ २४ ॥**

इति ॥ स्वयमाचारकथकेन परिहारोऽसदाचारस्य संपादनीयः, यतः स्वयमसदाचारमपरिहरतो धर्मकथनं नटवैराग्यकथनमिवानादेयमेव स्यात्, न तु साध्यसिद्धिकरमिति ॥

तथा ।

**ऋजुभावासेवनम् ॥ २५ ॥**

इति ॥ ऋजुभावस्य कौटिल्यत्यागरूपस्यासेवनमनुष्ठानं देशकेनैव कार्यम्। एवं हि तस्मिन्नविप्रतारणकारिणि संभाविते सति शिष्यस्तदुपदेशान्न कुतोऽपि दूरवर्ती स्यादिति ॥

तथा ।

**अपायहेतुत्वदेशना ॥ २६ ॥**

इति ॥ अपायानामनर्थानामिहलोकपरलोकगोचाराणां हेतुत्वं प्रस्तावादसदाचारस्य यो हेतुभावः, तस्य देशना विधेया। यथा।

यन्न प्रयान्ति पुरुषाः स्वर्गं यच्च प्रयान्ति विनिपातम्।
तत्र निमित्तमनार्यः प्रमाद इति निश्चितमिदं मे ॥१॥

प्रमादस्थामदाचार इति ॥

अपायानेव व्यक्तीकुर्वन्नाह ।

## नारकदुःखोपवर्णनम् ॥ २७ ॥

इति ॥ नरके भवा नारकास्तेषामुपलक्षणत्वात्तिर्यगादीनां च दुःखान्यशर्माणि, तेषामुपवर्णनं विधेयम् । यथा ।

तीक्ष्णैरसिभिर्दीप्तैः कुन्तैर्विषमैः परश्वधैश्चक्रैः ।
परशुत्रिशूलतोमरमुद्गरवासीभुशुण्डीभिः ॥१॥
संभिन्नतालुशिरसश्छिन्नभुजाश्छिन्नकर्णनासौष्ठाः ।
भिन्नहृदयोदरान्त्रा भिन्नाक्षिपुटाः सुदुःखार्ताः ॥२॥
निपतन्त उत्पतन्तो विचेष्टमाना महीतले दीनाः ।
नेक्षन्ते त्रातारं नैरयिकाः कर्मपटलान्धाः ॥३॥

क्षुत्तृड्हिमात्युष्णभयार्दितानां
पराभियोगव्यसनातुराणाम् ।
अहो तिरश्चामतिदुःखितानां
सुखानुषङ्गः किल वार्त्तमेतत् ॥४॥

मानुष्यकेऽपि दारिद्र्यरोगदौर्भाग्यशोकमौर्ख्याणि ।
जातिकुलावयवादिन्यूनत्वं चाश्नुते प्राणी ॥५॥

देवेषु च्यवनवियोगदुःखितेषु
क्रोधेर्ष्यापदमदनातितापितेषु ।
आर्या नस्तदिह विचार्य संगिरन्तु
यत्सौख्यं किमपि निवेदनीयमस्ति ॥६॥ इति ॥

तथा।

## दुःकुलजन्मप्रशस्तिः ॥ २८ ॥

इति॥ दुःकुलेषु शकयवनशबरबर्बरादिसंबन्धिषु यज्जन्मासदाचाराणां प्राणिनां प्रादुर्भावः, तस्य प्रशस्तिः प्रज्ञापना कार्या॥

तत्र चोत्पन्नानां किमित्याह।

## दुःखपरंपरानिवेदनम् ॥ २९ ॥

इति॥ दुःखानां शारीरमानसाशर्मलक्षणानां या परंपरा प्रवाहः, तस्या निवेदनं प्ररूपणम्। यथा। असदाचारपारवश्याज्जीवा दुःकुलेषूत्पद्यन्ते। तत्र चासुन्दरवर्णरसगन्धस्पर्शशरीरभाजां तेषां दुःखनिराकरणनिबन्धनस्य धर्मस्य स्वप्नेऽप्यनुपलम्भाद्धिंसानृतस्तेयाद्युद्धकर्मप्रवणानां नरकादिफलपापकर्मोपचय एव संपद्यते। तदभिभूतानामिह परत्र चाव्यवच्छिन्नानुबन्धा दुःखपरंपरा प्रसूयते। यदुच्यते।

तैः कर्मभिः स जीवो विवशः संसारचक्रमुपयाति।
द्रव्यक्षेत्राद्धा भावभिन्नमावर्तते बहुशः॥१॥

तथा।

## उपायतो मोहनिन्दा ॥ ३० ॥

इति॥ उपायत उपायेनानर्थप्रधानानां मूढपुरुषलक्षणानां प्रपञ्चरूपेण मोहस्य मूढताया निन्दानादरणीयताख्यापनेति।

यथा।

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥१॥
अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।
नैव मूढो विजानाति मुमूर्षुरिव भेषजम् ॥२॥
संप्राप्तः पण्डितः कृच्छ्रं प्रज्ञया[१] प्रतिबुध्यते ।
मूढस्तु कृच्छ्रमासाद्य शिलेवाम्भसि मज्जति ॥३॥

अथवोपायतो मोहफलोपदर्शनद्वारलक्षणान्मोहनिन्दा कार्येति ।

जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतम् ।
वीक्षमाणा अपि भुवं नोद्विजन्त्यपि मोहतः ॥१॥
धर्मबीजं परं प्राप्य मानुष्यं कर्मभूमिषु ।
न सत्कर्मकृषावस्य प्रयतन्तेऽल्पमेधसः ॥२॥

"अस्य" इति धर्मबीजस्य ।

बडिशामिषवत्तुच्छे कुसुखे दारुणोदये ।
सक्ताास्त्यजन्ति सच्चेष्टां धिगहो दारुणं तमः ॥३॥ इति ।

तथा ।

## सज्ज्ञानप्रशंसनम् ॥ ३१ ॥

इति ॥ सदविपर्यस्तं, ज्ञानं यस्य स सज्ज्ञानः पण्डितो जनः, तस्य सतो वा ज्ञानस्य विवेचनलक्षणस्य प्रशंसनं पुरस्कार इति॰। यथा ।

१ P प्रजया ।

तन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नो पद्मजन्माष्टभिः
स्कन्दो द्वादशभिर्न वा न मघवांश्चक्षुःसहस्रेण च ।
संभूयापि जगत्त्रयस्य नयनैस्तद्वस्तु नो वीक्ष्यते
प्रत्याहृत्य दृशः समाहितधियः पश्यन्ति यत्पण्डिताः ॥१॥

इति ।

तथा ।

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥१॥
न हृष्यत्यात्मनो माने नापमाने च रुष्यति ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥२॥

तथा ।

## पुरुषकारसत्कथा ॥ ३२ ॥

इति ॥ पुरुषकारस्योत्साहलक्षणस्य सत्कथा माहात्म्यप्रशंसनम् । यथा ।

दुर्गा तावदियं समुद्रपरिखा तावन्निरालम्बनं
व्योमैतन्ननु तावदेव विषमः पातालयात्रागमः ।
दत्त्वा मूर्धनि पादमुद्यमभिदो दैवस्य कीर्तिप्रियैः
वीरैर्यावदहो न साहसतुलामारोप्यते जीवितम् ॥१॥

तथा ।

विहाय पौरुषं कर्म यो दैवमनुवर्तते ।
तद्धि शाम्यति तं प्राप्य क्लीबं पतिमिवाङ्गना ॥२॥

तथा ।

## वीर्यर्द्धिवर्णनम् ॥ ३३ ॥

इति ॥ वीर्यर्द्धेः प्रकर्षरूपायाः शुद्धाचारबललभ्यायास्तीर्थकरवीर्यपर्यवसानाया वर्णनमिति । यथा ।

मेरुं दण्डं धरां छत्रं तत्केचित्कर्तुमीशते ।
तत्सदाचारकल्पद्रुफलमाहुर्महर्षयः ॥ १ ॥

तथा ।

## परिणते गम्भीरदेशनायोगः ॥ ३४ ॥

इति ॥ अस्मिन्पूर्वमुद्दिष्टे उपदेशजाले श्रद्धानज्ञानानुष्ठानवत्तया परिणते सात्मीभावमुपगते सत्युपदेशार्हस्य जन्तोर्गम्भीरायाः पूर्वदेशनापेक्षयात्यन्तसूक्ष्माया आत्मास्तित्वतद्बन्धमोक्षादिकाया देशनाया योगो व्यापारः कार्यः । इदमुक्तं भवति । यः पूर्वं साधारणगुणप्रशंसादिरनेकधोपदेशः प्रोक्त आस्ते, स यदा तदावारककर्मह्रासातिशयादङ्गाङ्गीभावलक्षणं परिणाममुपागतो भवति, तदा जीर्णे भोजनमिव गम्भीरदेशनायामसौ देशनार्होऽवतार्यत इति ॥

अयं च गम्भीरदेशनायोगो न श्रुतधर्मकथनमन्तरेणोपपद्यत इत्याह ।

## श्रुतधर्मकथनम् ॥ ३५ ॥

इति ॥ श्रुतधर्मस्य वाचनापृच्छनापरावर्तनानुप्रेक्षाधर्मकथनलक्षणस्य सकलकुशलकलापकल्पद्रुमविपुलालवालकल्पस्य कथनम् । यथा ।

चक्षुष्मन्तस्त एवेह ये श्रुतज्ञानचक्षुषा ।
सम्यक् सदैव पश्यन्ति भावान् हेयेतरान्नराः ॥१॥

अयं च श्रुतधर्मः प्रतिदर्शनमन्यथान्यथाप्रवृत्त इति नामावद्यापि तत्सम्यग्भावं विवेचयितुमलमित्याह ।

बहुत्वात्परीक्षावतारः ॥ ३६ ॥

इति ॥ तस्य हि बहुत्वाच्छ्रुतधर्माणां "श्रुतधर्म"इति शब्दसमानतया विप्रलब्धबुद्धेः परीक्षायां त्रिकोटिपरिशुद्धलक्षणायां श्रुतधर्मसंबन्धिन्यामवतारः कार्यः । अन्यत्राप्यवाचि ।

तं शब्दमात्रेण वदन्ति धर्मं
विश्वेऽपि लोका न विचारयन्ति ।
स शब्दसाम्येऽपि विचित्रभेदै-
र्विभिद्यते चौरमिवार्जनीयः ॥१॥
लक्ष्मीं विधातुं सकलां समर्थं
सुदुर्लभं विश्वजनीनमेनम् ।
परीक्ष्य गृह्णन्ति विचारदक्षाः
सुवर्णवद्वञ्चनभीतचित्ताः ॥२॥ इति ॥

परीक्षोपायमेवाह ।

कषादिप्ररूपणा ॥ ३७ ॥

इति ॥ यथा सुवर्णमात्रसाम्येन तथाविधमुग्धलोकेष्वविचारेणैव शुद्धाशुद्धरूपस्य सुवर्णस्य प्रवृत्तौ कषच्छेदतापाः

परीक्षणाय विचक्षणैराद्रियन्ते, तथात्रापि श्रुतधर्मे परीक्षणीये कषादीनां प्ररूपणेति ॥

कषादीनेवाह ।

## विधिप्रतिषेधौ कषः ॥ ३८ ॥

इति ॥ विधिरविरुद्धकर्तव्यार्थोपदेशकं वाक्यं, यथा "स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यं", "समितिगुप्तिशुद्धा क्रिया" इत्यादि। प्रतिषेधः पुनः "न हिंस्यात्सर्वभूतानि", "नानृतं वदेत्" इत्यादि। ततो विधिश्च प्रतिषेधश्च विधिप्रतिषेधौ। किमित्याह "कषः" सुवर्णपरीक्षायामिव कषपट्टके रेखा। इदमुक्तं भवति। यत्र धर्मे उक्तलक्षणो विधिः प्रतिषेधश्च पदे पदे सुपुष्कल उपलभ्यते स धर्म कषशुद्धः, न पुनः—

अन्यधर्मस्थिताः सत्त्वा असुरा इव विष्णुना।
उच्छेदनीयास्तेषां हि वधे दोषो न विद्यते ॥१॥

इत्यादि वाक्यगर्भ इति ॥

छेदमाह ।

## तत्संभवपालनाचेष्टोक्तिश्छेदः ॥ ३९ ॥

इति ॥ तयोर्विधिप्रतिषेधयोरनाविर्भूतयोः सम्भवः प्रादुर्भूतयोश्च पालना रक्षारूपा; ततस्तत्संभवपालनार्थं या चेष्टा भिक्षाटनादिबाह्यक्रियारूपा, तस्या उक्तिश्छेदः। यथा कषशुद्धावप्यन्तरामशुद्धिमाशङ्कमानाः सौवर्णिकाः सुवर्णगुलिकादेश्छेदमाद्रियन्ते, तथा, कषशुद्धावपि धर्मस्य छेदमा-

पेक्षन्ते । स च च्छेदो विशुद्धबाह्यचेष्टारूपः । विशुद्धा च चेष्टा सा यत्रासन्तावपि विधिप्रतिषेधावबाधितरूपौ स्वात्मानं लभेते लब्धात्मानौ चातिचारलक्षणापचारविरहितावुत्तरोत्तरां वृद्धिमनुभवतः । सा यत्र धर्मे चेष्टा सम्प्रपञ्चा प्रोच्यते स धर्मश्छेदशुद्ध इति । यथा कषच्छेदशुद्धमपि सुवर्णं तापमसहमानं कालिकोन्मीलनदोषान्न सुवर्णभावमश्नुते, एवं धर्मोऽपि सत्यामपि कषच्छेदशुद्धौ तापपरीक्षायामनिर्वहमाणो न स्वभावमासादयति ॥

अतस्तापं प्रज्ञापयन्नाह ।

**उभयनिबन्धनभाववादस्तापः ॥ ४० ॥**

इति ॥ उभयोः कषच्छेदयोरनन्तरमेवोक्तरूपयोर्निबन्धनं परिणामिरूपं कारणं यो भावो जीवादिलक्षणः, तस्य वादः प्ररूपणा । किमित्याह "तापः" । अत्र श्रुतधर्मपरीक्षाधिकारे । इदमुक्तं भवति । यत्र शास्त्रे द्रव्यरूपतयाप्रच्युतानुत्पन्नः पर्यायात्मकतया च प्रतिक्षणमपरापरस्वभावास्कन्दनेनानित्यस्वभावो जीवादिरवस्थाप्यते, स्यात् तत्र तापशुद्धिः, यतः परिणामिन्येवात्मादौ तथाविधाशुद्धपर्यायनिरोधेन ध्यानाध्ययनाद्यपरशुद्धपर्यायप्रादुर्भावादुक्तलक्षणः कषो बाह्यचेष्टाशुद्धिलक्षणश्च च्छेद उपपद्यते, न पुनरन्यथेति ॥

एतेषां मध्यात्को बलीयानितरो वेति प्रश्ने यत्कर्तव्यं तदाह ।

अमीषामन्तरदर्शनम् ॥ ४१ ॥

इति ॥ अमीषां त्रयाणां परीक्षाप्रकाराणां परस्परमन्तरस्य विशेषस्य समर्थासमर्थरूपस्य दर्शनं कार्यमुपदेशकेन ॥

तदेव दर्शयति ।

कषच्छेदयोरयत्नः ॥ ४२ ॥

इति ॥ कषच्छेदयोः परीक्षाक्षमत्वेनादरणीयतायामयत्नोऽतात्पर्यं मतिमतामिति ॥

कुत इत्याह ।

तद्भावेऽपि तापाभावेऽभावः ॥ ४३ ॥

इति ॥ तयोः कषच्छेदयोर्भावः सत्ता तद्भावस्तस्मिन् किं पुनरतद्भाव इत्यपिशब्दार्थः । किमित्याह "तापाभावे" उक्तलक्षणतापविरहे "अभावः" परमार्थतोऽसत्त्वेव परीक्षणीयस्य । न हि तापे विघटमानं हेम कषच्छेदयोः सतोरपि स्वं स्वरूपं प्रतिपत्तुमलं, जातिसुवर्णत्वात्तस्य ॥

एतदपि कथमित्याह ।

तच्छुद्धौ हि तत्साफल्यम् ॥ ४४ ॥

इति ॥ तच्छुद्धौ तापशुद्धौ । हिर्यस्मात् । तत्साफल्यं तयोः कषच्छेदयोः सफलभावः । तथाहि । ध्यानाध्ययनादिकोऽर्थो विधीयमानः प्रागुपात्तकर्मनिर्जरणफलो हिंसादिकस्य प्रति-

षिध्यमानो नवकर्मोपादाननिरोधफलः। बाह्या चेष्टाशुद्धिश्चानयोरेवानाविर्भूतयोश्च परिपालनेन फलवती स्यात्, न चापरिणामिन्यात्मन्युक्तलक्षणौ कषच्छेदौ स्वकार्यं कर्तुं प्रभविष्णू स्यातामिति तयोस्तापशुद्धावेव सफलत्वमुपपद्यते, न पुनरन्यथेति ॥

ननु फलविकलावपि तौ भविष्यत इत्याह।

**फलवन्तौ च वास्तवौ ॥ ४५ ॥**

इति। उक्तलक्षणफलभाजौ सन्तौ पुनस्तौ कषच्छेदौ वास्तवौ भवतः। स्वसाध्यक्रियाकारिणो हि वस्तुनो वस्तुत्वमुशन्ति सन्तः ॥

विपक्षे बाधामाह।

**अन्यथा याचितकमण्डनम् ॥ ४६ ॥**

इति॥ अन्यथा फलविकलौ सन्तौ वस्तुपरीक्षाधिकारे समवतारितावपि तौ याचितकमण्डनं वर्तेत इति। परकीयत्वसंभावनोपहतत्वात्कुत्सितं याचितं याचितकं तच्च तन्मण्डनं च कटककुण्डलादिराभरणविशेषो याचितकमण्डनम्। द्विविधं ह्यलंकारफलम्। निर्वाहे सति परिशुद्धाभिमानिकसुखजनिका स्वशरीरशोभा, कथंचिन्निर्वहणाभावे च तेनैव निर्वाहः। न च याचितकमण्डने एतद्द्वितयमप्यस्ति, परकीयत्वात्तस्य। ततो याचितकमण्डनमिव याचितकमण्डनम्। इदमुक्तं भवति।

द्रव्यपर्यायोभयस्वभावे जीवे कषच्छेदौ निरुपचरिततया ख्याप्यमानौ स्वफलं प्रत्ययंस्वसामर्थ्याविव स्यातां; नित्याद्येकान्तवादे तु स्ववादशोभार्थं तद्वादिभिः कल्प्यमानावप्येतौ याचितकमण्डनाकारौ प्रतिभासेते, न पुनः स्वकार्यकाराविंत्याह । अवगतं यथा कषच्छेदतापशुद्धः श्रुतधर्मो ग्राह्यः; परं किंप्रणेतृकोऽसौ प्रमाणमिति व्यतिरेकतः साधयन्नाह ।

## नातत्त्ववेदिवादः सम्यग्वादः ॥ ४७ ॥

इति ॥ न नैवातत्त्ववेदिनः साक्षादेव वस्तुतत्त्वमज्ञातुं शीलस्य पुरुषविशेषस्यार्वाग्दर्शिन इत्यर्थः, वादो वस्तुप्रणयनं, अतत्त्ववेदिवादः । किमित्याह "सम्यग्वादः" यथावस्थितार्थवादः साक्षादवीक्ष्यमाणेन हि प्रमात्रा प्रोक्तं जात्यन्धचित्रकरनरालिखितचित्रकर्मवद्यथावस्थितरूपविसंवादनासमञ्जसमेव शास्त्रं स्यादिति कथं तद्भाषितं वस्त्वविपरीतरूपतां प्रतिपत्तुमुत्सहत इति ॥

सम्यग्वादताया एवोपायमाह ।

## बन्धमोक्षोपपत्तितस्तच्छुद्धिः ॥ ४८ ॥

इति ॥ बन्धो मिथ्यात्वादिहेतुभ्यो जीवस्य कर्मपुद्गलानां च वह्न्ययःपिण्डयोरिव क्षीरनीरयोरिव वा परस्परमविभागपरिणामेनावस्थानम् । मोक्षः पुनः सम्यग्दर्शनज्ञानचारित्रेभ्यः

कर्मणामत्यन्तोच्छेदः। ततो बन्धस्य मोक्षस्य बन्धमोक्षौ, तयोरुपपत्तिर्घटना, तस्याः सकाशात्तच्छुद्धिर्वस्तुवादनिर्मलता चिन्तनीया। इदमुक्तं भवति। यस्मिन्सिद्धान्ते बन्धमोक्षयोग्य आत्मा तैस्तैर्विशेषैर्निरूप्यते, स सर्ववेदिपुरुषप्रतिपादित इति कोविदैर्निश्चीयत इति ॥

इयमपि बन्धमोक्षोपपत्तिर्यथा युज्यते तथाह ।

## इयं बध्यमानबन्धनभावे ॥ ४९ ॥

इति ॥ इयं बन्धमोक्षोपपत्तिर्बध्यमानस्य बन्धनस्य च वक्ष्यमाणस्य भावे सद्भावे सति भवति ॥

कुत इत्याह ।

## कल्पनामात्रमन्यथा ॥ ५० ॥

इति ॥ यस्मात्कारणादियं कल्पनैव केवला वितथार्थप्रतिभासरूपा न पुनस्तत्र प्रतिभासमानोऽर्थोऽपीति कल्पनामात्रमन्यथा मुख्यबध्यमानबन्धनयोरभावे वर्तत इति ॥

बध्यमानबन्धने एव व्याचष्टे ।

## बध्यमान, आत्मा बन्धनं वस्तुसत्कर्म ॥ ५१ ॥

इति ॥ तत्र बध्यमानः स्वसामर्थ्यतिरोधानेन पारवश्यमानीयमानः। क इत्याह "आत्मा" चतुर्दशभूतग्रामभेदभिन्नो जीवः प्रतिपाद्यते। तथा बध्यते मिथ्यात्वादिभिर्हेतुभिरात्माने-

नेति बन्धनम्। किमित्याह "वस्तुसत्" परमार्थतो विद्यमानं "कर्म" ज्ञानावरणादि, अनन्तानन्तपरमाणुप्रचयस्वभावं; अत एव मूर्तप्रकृतीति। अत्र "आत्म"— ग्रहणेन सांख्यमतनिरासमाह, यतस्तत्रोच्यते।

आत्मा न बध्यते नापि मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥

"वस्तुसद्"— ग्रहणेन तु सौगतमतस्य, यतस्तत्रापि पठ्यते।

चित्तमेव हि संसारो रागादिक्लेशवासितम्।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते॥१॥

"रागादिक्लेशवासितं" इति रागादिक्लेशैः सर्वथा चित्तादव्यतिरिक्तैर्वासितं संस्कृतम्। एवं हि बध्यमानान्न भिन्नं "वस्तुसत्कर्म" इत्यभ्युपगतं भवति। तत्र प्रकृतेरेव बन्धमोक्षाभ्युपगमे आत्मनः संसारापवर्गावस्थयोरभिन्नैकस्वभावत्वेन योगिनां यमनियमाद्यनुष्ठानं मुक्तिफलतयोक्तं यद्योगशास्त्रेषु तद्व्यर्थमेव स्यात्। बौद्धस्यापि चित्तादव्यतिरिक्तकर्मवादिनोऽवस्तुसत्त्वमेव कर्मणः स्यात्, यतो यद्यतोऽव्यतिरिक्तस्वरूपं तत्तदेव भवति स च लोके तदेव तेनैव बध्यत इति प्रतीतिरस्ति, बध्यमानबन्धनयोः पुरुषनिगडादिरूपयोर्भिन्नस्वभावयोरेव लोके व्यवह्रियमाणत्वात्। किं च। चित्तमात्रत्वे कर्मणोऽभ्युपगम्यमाने संसारापवर्गयोर्भेदो न प्राप्नोति, चित्तमात्रस्योभयत्राप्यविशेषात्॥

बन्धमोक्षहेतूनेवाह।

## हिंसादयस्तद्योगहेतवस्तदितरे तदितरस्य ॥ ५२ ॥

इति ॥ "हिंसादयः" इति हिंसानृतादयो जीवपरिणामविशेषाः । किमित्याह "तद्योगहेतवः" तस्य बन्धस्य संसारफलत्वेन परमार्थचिन्तायां पापात्मकस्यैव हेतव आत्मना सह बन्धकारणभावमापन्ना वर्तन्ते । यदवाचि ।

हिंसानृतादयः पञ्च तत्त्वाश्रद्धानमेव च ।
क्रोधादयश्च चत्वार इति पापस्य हेतवः ॥१॥

तथा तदितरेभ्यो हिंसादिभ्य इतरेऽहिंसादय एव तदितरस्य तस्माद्बन्धादितरो मोक्षः, तस्यानुरूपकारणप्रभवत्वात्सर्वकार्याणामिति ॥

बन्धस्यैव स्वरूपमाह ।

## प्रवाहतोऽनादिमान् ॥ ५३ ॥

इति ॥ प्रवाहतः परंपरातोऽनादिमानादिभूतबन्धकालविकलः ॥

अत्रैवार्थ उपचयमाह ।

## कृतकत्वेऽप्यतीतकालवदुपपत्तिः ॥ ५४ ॥

इति ॥ कृतकत्वेऽपि स्वहेतुभिर्निष्पादितत्वेऽपि बन्धस्यातीतकालस्येवोपपत्तिर्घटनानादिमत्त्वस्य वक्तव्या । किमुक्तं भवति । प्रतिक्षणं क्रियमाणेऽपि बन्धः प्रवाहापेक्षयातीतकालवदनादिमानेव ॥

अथ यतोऽशादनयोर्दृष्टान्तदार्ष्टान्तिकभावोऽभूत्तं साक्षादेव दर्शयन्नाह ।

**वर्तमानताकल्पं कृतकत्वम् ॥ ५५ ॥**

इति ॥ यादृशी अतीतकालसमयानां वर्तमानता सांप्रतरूपता तादृशं बन्धस्य कृतकत्वं क्रियमाणत्वं क्रियाकालनिष्ठाकालयोश्च निश्चयनयाभिप्रायेणाभेदादेवमुपन्यस्तमन्यथा वर्तमानताकल्पं क्रियमाणत्वमित्युपन्यसितुं युक्तं स्यात् ॥

यादृशि चात्मनि प्रागुपन्यस्ता बन्धहेतव उपपद्यन्ते, तमन्वयव्यतिरेकाभ्यामाह ।

**परिणामिन्यात्मनि हिंसादयो भिन्नाभिन्ने च देहात् ॥ ५६ ॥**

इति ॥ परिणमनं परिणामो द्रव्यरूपतयावस्थितस्यैव वस्तुनः पर्यायान्तरप्रतिपत्तिः । यथोक्तम् ।

परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम् ।
न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥ १ ॥

“परिणामो नित्यमस्यास्ति” इति परिणामी, तत्रात्मनि जीवे हिंसादयः प्राग्निरूपिता उपपद्यन्ते । तथा भिन्ने पृथग्रूपे, अभिन्ने च तद्विपरीते । चकारो विशेषणसमुच्चये । कस्मादित्याह “देहात्” शरीरात् ॥

अत्रैवार्थे विपक्षे बाधामाह ।

## अन्यथा तदयोगः ॥ ५७ ॥

इति ॥ यदि हि परिणाम्यात्मा भिन्नाभिन्नश्च देहान्नेष्यते, तदा हिंसादीनां बन्धहेतुतयोपन्यस्तानामयोगोऽघटना ॥

कथमित्याह ।

## नित्य एवाधिकारतोऽसंभवात् ॥ ५८ ॥

इति ॥ नित्य एवाप्रच्युतानुत्पन्नस्थिरैकस्वभाव आत्मनि न तु पर्यायनयावलम्बनेनानित्यरूपेऽपीत्येवकारार्थः । अभ्युपगम्यमाने द्रव्यास्तिकनयावष्टम्भतोऽधिकारतस्तिलतुषत्रिभागमात्रमपि पूर्वस्वरूपादप्रच्यवमानत्वेनासंभवादघटनात् हिंसायाः, यतो विवक्षितहिंसा विवक्षितपर्यायविनाशादिस्वभावा शास्त्रेषु गीयते । यथोक्तम् ।

तत्पर्यायविनाशो दुःखोत्पादस्तथा च संक्लेशः ।
एष वधो जिनभणितो वर्जयितव्यः प्रयत्नेन ॥ १ ॥

तथा ।

## अनित्ये चापराहिंसनेन ॥ ५९ ॥

इति ॥ अनित्ये च सर्वथा प्रतिक्षणभङ्गुरे पुनरात्मन्यभ्युपगम्यमाने सति । अपरेण केनचिल्लुब्धकादिना । अहिंसनेनाव्यापादनेन । कस्यचिच्छूकरादेर्हिंसासंभवः । प्रतिक्षणभङ्गुरत्वाभ्युपगमे हि सर्वेष्वात्मसु स्वत एव स्वजन्मलाभक्षणानन्तरं सर्वथा निवर्तमानेषु कः कस्य हिंसकः को वा कस्य हिंसनीय इति ॥

तथा ।

**भिन्न एव देहान्न स्पृष्टवेदनम् ॥ ६० ॥**

इति ॥ यदि हि भिन्न एव विलक्षण एव सर्वथा देहादात्मा, तदा न नैव स्पृष्टस्य योषिच्छरीरशयनासनादेः कण्टकज्वलनज्वालादेश्चेष्टानिष्टरूपस्य स्पर्शनेन्द्रियविषयस्य देहेन स्पृश्यमानस्य वेदनमनुभवनं प्राप्नोति भोगिनः पुरुषस्य । न हि देवदत्ते शयनादीनि भोगाङ्गानि स्पृशति विष्णुमित्रस्यानुभवप्रतीतिरस्तीति ॥

तथा ।

**निरर्थकश्चानुग्रहः ॥ ६१ ॥**

इति ॥ निरर्थकः पुरुषसंतोषलक्षणफलविकलः । चः समुच्चये । अनुग्रहः स्रक्चन्दनाङ्गनावसनादिभिर्भोगाङ्गैरुपष्टम्भो भवेद्देहस्य, देहादात्मनोऽत्यन्तभिन्नत्वात् । निग्रहस्याप्युपलक्षणमेतत् ॥

एवं भेदपक्षं निराकृत्याभेदपक्षनिराकरणायाह ।

**अभिन्न एवामरणं वैकल्यायोगात ॥ ६२ ॥**

इति । अभिन्न एव देहात्सर्वथा नानात्वमनात्मसमान आत्मनि सति चैतन्यविशिष्टः कायः पुरुष इति मतावलम्बिनां सुरगुरुशिष्याणामभ्युपगमेन । किमित्याह "अमरण" मृत्योरभाव आपद्यत आत्मनः । कुत इत्याह । वैकल्यस्यायोगादघटनात्, यतो मृतेऽपि देहे न किंचित्पृथिव्यादिभूतानां देहारम्भकाणां वैकल्यमुपलभ्यते । वायोस्तत्र वैकल्यमिति चेत् । न, वायुमन्तरेणोच्छूनभावायोगात् । तर्हि तेजसस्तत्र वैकल्यमस्तीति

चेत्। न, तेजसो व्यतिरेकेण कथितभावाप्रतिपत्तेरिति कथं देहाभिन्नात्मवादिनां मरणमुपपन्नं भवेदिति। प्राक्तनावस्थयो-र्वायुतेजसोस्तत्राभावान्मरणमुपपद्यत इति चेत्। उच्यते।

## मरणे परलोकाभावः ॥ ६३ ॥

इति॥ मरणेऽभ्युपगम्यमाने परलोकस्याभावः प्रसज्यते। न हि देहादभिन्न एवात्मन्यभ्युपगम्यमाने कश्चित्परलोकयायी सिद्ध्यति, देहस्यात्रैव तावत्पातदर्शनात्तद्व्यतिरिक्तस्य चात्मनो ऽनभ्युपगमात्। न च वक्तव्यं "परलोक एव तर्हि नास्ति", तस्य सर्वविशिष्टैः प्रमाणोपपन्नत्वेनाभीष्टत्वात्। प्रमाणं चेदम्। यो योऽभिलाषः स सोऽभिलाषान्तरपूर्वको दृष्टः, यथा यौवनकालाभिलाषो बालकालीनाभिलाषपूर्वकः, अभिलाषश्च बालस्य तदहर्जातस्य प्रसारितलोचनस्य मातुः स्तनौ निभालयतः स्तन्यस्पृहारूपः। यच्च तदभिलाषान्तरं तन्नियमाद्भवान्तरभावीति॥

तथा।

## देहकृतस्यात्मनानुपभोगः ॥ ६४ ॥

इति॥ एकान्तभेदे देहात्मनोरभ्युपगते सांख्येन देहेन कृतस्य परेषां ताडनतर्जनहिंसनादिना देवतानमनस्तवनादिना चोपायेनोपात्तस्य शुभाशुभरूपस्य कर्मण आत्मनानुपभोगः सुखदुःखानुभवद्वारेणावेदनमापद्यते। न हि कश्चिदन्यकृतं शुभमशुभं वा वेदयितुमर्हति, कृतनाशाकृताभ्यागमदोष-प्रसङ्गादिति॥

तथा ।

**आत्मकृतस्य देहेन ॥ ६५ ॥**

इति ॥ यदि च देहाद्भिन्न एवात्मेत्यभ्युपगमः, तदात्मकृतस्य कुशलादकुशलाद्वानुष्ठानादात्मसमुपार्जितस्य शुभस्याशुभस्य च कर्मण इहामुत्र च देहेन कर्त्रानुपभोगोऽवेदनं प्रसज्यते, अन्यकृतत्वात् ॥

यदि नामैवमापद्यते, तथापि को दोष इत्याह ।

**दृष्टेष्टबाधा ॥ ६६ ॥**

इति ॥ दृष्टस्य सर्वलोकप्रतीतस्य देहकृतस्यात्मना, आत्मकृतस्य च देहेन यः सुखदुःखानुभवः, तस्य; इष्टस्य च शास्त्रसिद्धस्य बाधाप्रसङ्गः प्राप्नोति । तथाहि । दृश्यत एवात्मा देहकृताच्चौर्यपारदार्याद्यनार्यकार्याच्चारकादौ चिरशोकविषादादीनि दुःखानि समुपलभमानः, शरीरं च तथाविधमनःसंक्षोभादापन्नज्वरादिजनितव्यथामनुभवति । न च दृष्टस्यापलापिता युक्ता सतां नास्तिकलक्षणत्वात्तस्याः ॥

इत्थं सर्वथा नित्यमनित्यं च तथा देहाद्भिन्नमभिन्नं चात्मानमङ्गीकृत्य हिंसादीनामसंभवमापाद्योपसंहरन्नाह ।

**अतोऽन्यथैतत्सिद्धिरिति तत्त्ववादः ॥ ६७ ॥**

इति ॥ अत एकान्तवादादन्यथा नित्यानित्यादिस्वरूप आत्मनि समभ्युपगम्यमाने । एतत्सिद्धिर्हिंसादिसिद्धिः, तत्सिद्धौ

च तन्निबन्धना बन्धमोक्षसिद्धिरिति। एष तत्त्ववादः प्रतिज्ञायते योऽतत्त्ववादिना पुरुषेण वेदितुं न पार्यत इति ॥

एवं तत्त्ववादे निरूपिते किं कार्यमित्याह।

## परिणामपरीक्षा ॥ ६८ ॥

इति ॥ परिणामस्य तत्त्ववादविषयज्ञानश्रद्धानलक्षणस्य परीक्षा एकान्तवादार्हचिमत्तवनवचनसंभाषणादिनोपायेन निर्णयनं विधेयम ॥

ततोऽपि कि कार्यमित्याह ।

## शुद्धे बन्धभेदकथनम् ॥ ६९ ॥

इति ॥ शुद्धे परमां शुद्धिमागते परिणामे बन्धभेदकथनं बन्धभेदस्य मूलप्रकृतिबन्धरूपस्याष्टविधस्योत्तरप्रकृतिबन्धस्वभावस्य च सप्तनवतिप्रमाणस्य कथन प्रज्ञापन कार्यं बन्धशतकादिग्रन्थानुसारेणेति ॥

तथा ।

## वरबोधिलाभप्ररूपणा ॥ ७० ॥

इति ॥ वरस्य तीर्थकरलक्षणफलकारणतया शेषबोधिलाभेभ्योऽतिशायिनो बोधिलाभस्य प्ररूपणा प्रज्ञापना । अथवा वरस्य द्रव्यबोधिलाभव्यतिरेकिणः पारमार्थिकस्य बोधिलाभस्य प्ररूपणा हेतुतः स्वरूपतः फलतश्चेति ॥

तत्र हेतुतस्तावदाह ।

## तथाभव्यत्वादितोऽसौ ॥ ७१ ॥

इति ॥ भव्यत्वं नाम सिद्धिगमनयोग्यत्वमनादिपारिणामिको भावः, आत्मस्वतत्त्वमेव; तथाभव्यत्वं तु भव्यत्वमेव कालादिभेदेनात्मनां बीजसिद्धिभावान्नानारूपतामापन्नम् । आदिशब्दात्कालनियतिकर्मपुरुषपरिग्रहः । तत्र कालो विशिष्टपुद्गलपरावर्तोत्सर्पिण्यादिः । तथाभव्यत्वस्य फलदानाभिमुख्यकारी वसन्तादिवद्वनस्पतिविशेषस्य कालसद्भावेऽपि न्यूनाधिकव्यपोहेन नियतकार्यकारिणी नियतिः । अपचीयमानसंक्लेशं नानाशुभाशयसंवेदनहेतुः कुशलानुबन्धि कर्म । समुपचितपुण्यसंभारो महाकल्याणाशयः प्रधानपरिज्ञानवान् प्रकृष्यमाणार्थपरिज्ञानकुशलः पुरुषः । ततस्तथाभव्यत्वमादौ येषां ते तथा, तेभ्योऽसौ वरबोधिलाभः प्रादुरस्ति । स्वरूपं च जीवादिपदार्थश्रद्धानमस्य ॥

अथ फलमेतस्याह ।

## ग्रन्थिभेदे नात्यन्तसंक्लेशः ॥ ७२ ॥

इति ॥ इह ग्रन्थिरिव ग्रन्थिर्दृढो रागद्वेषपरिणाम, तस्य ग्रन्थेर्भेदेऽपूर्वकरणवज्रसूच्या विदारणे सति लब्धशुद्धतत्त्वश्रद्धानसामर्थ्यान्नात्यन्तं न प्रागिवातिनिबिडतया संक्लेशो रागद्वेषपरिणामः प्रवर्तते । न हि लब्धवेधपरिणामो मणिः कथंचिन्मलापूरितरन्ध्रोऽपि प्रागवस्थां प्रतिपद्यत इति ॥

एतदपि कुत इत्याह ।

## न भूयस्तद्बन्धनम् ॥ ७३ ॥

इति ॥ यतो न भूयः पुनरपि तस्य ग्रन्थेर्बन्धनं निष्पादनं भेदे सति संपद्यत इति । किमुक्तं भवति । यावती ग्रन्थिभेदकाले सर्वकर्मणामायुर्वर्जानां स्थितिरन्तःसागरोपमकोटाकोटिलक्षणावशिष्यते तावत्प्रमाणमेवासौ सम्यगुपलब्धसम्यग्दर्शनो जीवः कथंचित्सम्यक्त्वापगमात्तीव्रायामपि तथाविधसंक्लेशप्राप्तौ बध्नाति न पुनस्तं बन्धेनातिक्रामतीति ।

तथा ।

## असत्यपाये न दुर्गतिः ॥ ७४ ॥

इति ॥ असत्यविद्यमानेऽपाये विनाशे सम्यग्दर्शनस्य परिशुद्धभव्यत्वपरिपाकसामर्थ्यान्मतिभेदादिकारणानवाप्तौ न नैव दुर्गतिः कुदेवत्वकुमानुषत्वतिर्यक्त्वनारकत्वप्राप्तिः संपद्यते, किं तु सुदेवत्वसुमानुषत्वे एव स्यातां, अन्यत्र पूर्वबद्धायुष्केभ्य इति ॥

तथा ।

## विशुद्धेश्चारित्रम् ॥ ७५ ॥

इति ॥ विशुद्धेः परिशुद्धनिःशङ्कितत्वादिदर्शनाचारवारिपूरप्रक्षालितशङ्कादिपङ्कतया प्रकर्षप्राप्तिलक्षणायाः सम्यग्दर्शनसत्कायाः सकाशात् । किमित्याह "चारित्रं" सर्वसावद्ययोगपरिहारनिरवद्ययोगसमाचाररूपं संपद्यते शुद्धसम्यक्त्वस्यैव चारित्ररूपत्वात् । तथा चाचारसूत्रम् ।

जं मोणन्ति पासहा तं सम्मन्ति पासहा ।
जं सम्मन्ति पासहा तं मोणन्ति पासह त्ति ॥[१]

## भावनातो रागादिक्षयः ॥ ७६ ॥

इति ॥ भाव्यन्ते मुमुक्षुभिरभ्यस्यन्ते निरन्तरमेता इति भावनाः । ताश्चानित्यत्वाशरणत्वादयो द्वादश । यथोक्तम् ।

भावयितव्यमनित्यत्वमशरणत्वं तथैकतान्यत्वे ।
अशुचित्वं संसारः कर्मास्रवसंवरविधिश्च ॥ १ ॥
निर्जरणलोकविस्तरधर्मस्वाख्याततत्त्वचिन्ताश्च ।
बोधेः सुदुर्लभत्वं च भावना द्वादश विशुद्धाः ॥ २ ॥

ताभ्यो रागादिक्षयो रागद्वेषमोहमलप्रलयः संजायते । सम्यक्चिकित्सायेव वातपित्तादिरोगापगमः प्रचण्डपवनाद्वा यथा मेघमण्डलविघटनं, रागादिप्रतिपक्षभूतत्वाद्भावनानामिति ॥

ततोऽपि किमित्याह ।

## तद्भावेऽपवर्गः ॥ ७७ ॥

इति ॥ तस्य रागादिक्षयस्य भावे सकललोकालोकविलोकनशालिनोः केवलज्ञानदर्शनयोर्लब्धौ सत्यां निस्तीर्णभवार्णवस्य सतो जन्तोरपवर्ग उक्तनिरुक्त उद्भवतीति ॥

१ C reads the whole sūtra as follows: जं मोणन्ति पासहा तं मोणन्ति पासह त्ति ।

किंलक्षण इत्याह ।

**स आत्यन्तिको दुःखविगम इति ॥ ७८ ॥**

इति ॥ सोऽपवर्गः । अत्यन्तं सकलदुःखशक्तिनिर्मूलनेन भवतीत्यात्यन्तिकः । दुःखविगमः सर्वशारीरमानसाशर्मविरहः सर्वजीवलोकासाधारणानन्दानुभवश्चेति ॥

इत्थं देशनाविधिं प्रपञ्चोपसंहरन्नाह ।

**एवं संवेगकृद्धर्म आख्येयो मुनिना परः ।**
**यथाबोधं हि शुश्रूषोर्भावितेन महात्मना ॥ ७९ ॥**

इति ॥ एवमुक्तन्यायेन संवेगकृत्संवेगकारी देशनार्हप्राणिनः । संवेगलक्षणं चेदम् ।

तथ्ये धर्मे ध्वस्तहिंसाप्रबन्धे
देवे रागद्वेषमोहादिमुक्ते ।
साधौ सर्वग्रन्थसंदर्भहीने
संवेगोऽसौ निश्चलो योऽनुरागः ॥१॥ इति ॥

धर्म उक्तलक्षण आख्येयः प्रज्ञापनीयो मुनिना गीतार्थेन साधुना, अन्यस्य धर्ममुपदेष्टुमनधिकारित्वात् । यथोक्तं निशीथे ।

संसारदुक्खमहणो विबोहणो भवियपुण्डरीयाणं ।
धम्मो जिणपन्नत्तो पकप्पजइणा कहेयव्वो ॥१॥

"प्रकल्पयतिना" इत्यधीतनिशीथाध्ययनेनेति । परः शेषतीर्थान्तरीयधर्मातिशायितया प्रकृष्टः । कथमाख्येय इत्याह

“यथाबोधं हि” इति यथावबोधमेव, अनवबोधे धर्माख्यानस्योन्मार्गदेशनारूपत्वेन प्रत्युतानर्थसंभवात्। पठितं च “न ह्यन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यते” इति। कीदृशस्य सत इत्याह “शुश्रूषोः” श्रोतुमुपस्थितस्य। कीदृशेन मुनिनेत्याह “भावितेन” आख्यायमानधर्मप्रतिबद्धवासनावासितेन, भावाद्भावप्रसूतिरिति वचनात्, भाविताख्यानस्य श्रोतुस्तथाविधश्रद्धानादिनिबन्धनत्वात्। पुनरपि कीदृशेनेत्याह “महात्मना” तदनुग्रहैकपरायणतया महानात्मा यस्य स तथा तेनेत्याह। धर्माख्यानेऽपि यदा तथाविधकर्मदोषादनवबोधः श्रोतुरुत्पद्यते, तदा किंफलं धर्माख्यानमित्याह।

**अबोधेऽपि फलं प्रोक्तं श्रोतॄणां मुनिसत्तमैः।**
**कथकस्य विधानेन नियमाच्छुद्धचेतसः॥८०॥**

इति॥ अबोधेऽप्यनवगमेऽपि सम्यग्धर्मस्य फलं क्लिष्टकर्मनिर्जरालक्षणं प्रोक्तम्। केषामनवबोध इत्याह “श्रोतॄणां” श्रावकाणाम्। कैरुक्तमित्याह “मुनिसत्तमैः” भगवद्भिरर्हद्भिः। कथकस्य धर्मदेशकस्य साधोर्विधानेन बालमध्यमबुद्धिबुधरूपश्रोतृजनापेक्षालक्षणेन नियमादवश्यंतया। कीदृशस्य कथकस्येत्याह “शुद्धचेतसः” परानुग्रहप्रवृत्तिपरिणामस्येत्याह। प्रकारान्तरेणापि देशनाफलस्य संभाव्यमानत्वादलमिहैव यत्नेनेत्याशङ्क्याह।

**नोपकारो जगत्यस्मिंस्तादृशो विद्यते क्वचित् ।**
**यादृशी दुःखविच्छेदाद्देहिनां धर्मदेशना ॥ ८१ ॥**

इति ॥ न नैवोपकारोऽनुग्रहो जगति भुवनेऽस्मिन्नुपलभ्यमाने तादृशो विद्यते समस्ति क्वचित्काले क्षेत्रे वा । यादृशी यादृग्रूपा । दुःखविच्छेदाच्छारीरमानसदुःखापनयनात् । देहिनां देशनार्हाणाम् । धर्मदेशनेति धर्मदेशनाजनितो मार्गश्रद्धानादिर्गुणः, तस्य निःशेषक्लेशकलङ्कमोचनं प्रत्यवन्ध्यकारणत्वादिति ॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ देशनाविधिर्नाम द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

# तृतीयोऽध्यायः ।

व्याख्यातो द्वितीयोऽध्यायः । अथ तृतीय आरभ्यते । तस्य चेदमादिसूत्रम् ।

**सद्धर्मश्रवणादेवं नरो विगतकल्मषः ।**
**ज्ञाततत्त्वो महासत्त्वः परं संवेगमागतः ॥ १ ॥**

इति ॥ सद्धर्मश्रवणात्पारमार्थिकधर्माकर्णनात् । एवमुक्तनीत्या । नरः पुमान् । विगतकल्मषो व्यावृत्ततत्त्वप्रतिपत्तिबाधकमिथ्यात्वमोहादिमालिन्यः सन्नत एव ज्ञाततत्त्वः करकमलतलकलितनिस्तलस्थूलामलमुक्ताफलवच्छास्त्रलोचनबलेनालोकितसकलजीवादिवस्तुवादः । तथा महच्छुद्धश्रद्धानोन्मीलनेन प्रशस्तं सत्त्वं पराक्रमो यस्य स तथा । परं प्रकृष्टं संवेगमुक्तलक्षणमागतोऽवतीर्णः सन् ॥

किं करोतीत्याह ।

**धर्मोपादेयतां ज्ञात्वा संजातेच्छोऽत्र भावतः ।**
**दृढं स्वशक्तिमालोच्य ग्रहणे संप्रवर्तते ॥ २ ॥**

इति ॥ धर्मोपादेयतां

एक एव सुहृद्धर्मो मृतमप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥

इत्यादिवचनाद्धर्मोपादेयभावं ज्ञात्वावगम्य । संजातेच्छो लब्धचिकीर्षापरिणामः । अत्र धर्मे । दृढमतिसूक्ष्माभोगेन । स्वशक्तिं स्वसामर्थ्यमालोच्य विमृश्य ग्रहणे वक्ष्यमाणयोग वन्दनादिशुद्धिविधिना प्रतिपत्तावेव धर्मस्य । संप्रवर्तते सम्यक्प्रवृत्तिमाधत्ते । अदृढालोचने ह्ययथाशक्तिधर्मग्रहणप्रवृत्तौ भङ्गसंभवेन प्रत्युतानर्थभाव इति दृढग्रहणं कृतमिति ॥

ननु किमर्थमस्यैव धर्मग्रहणसंप्रवृत्तिर्भण्यत इत्याह ।

**योग्यो ह्येवंविधः प्रोक्तो जिनैः परहितोद्यतैः ।**
**फलसाधनभावेन नातोऽन्यः परमार्थतः ॥ ३ ॥**

इति ॥ योग्योऽर्हो भव्य इति । हिर्यस्मात् । एवंविधः सद्धर्मश्रवणादित्यादिग्रन्थोक्तविशेषणयुक्तः पुमान् धर्मप्रतिपत्तेः प्रोक्तः । कैरित्याह "जिनैः" अर्हद्भिः "परहितोद्यतैः" सकलजीवलोककुशलाधानधनैः । केन कारणेनेत्याह "फलसाधनभावेन" योग्यस्यैव धर्मग्रहणफलं प्रति साधनभावोपपत्तेः । व्यतिरेकमाह "न" नैव "अतः" धर्मग्रहीतुः "अन्यः" पूर्वश्लोकद्वयोक्तविशेषणविकलः "परमार्थतः" तत्त्ववृत्त्या योग्य इति ॥

**इति सद्धर्मग्रहणार्ह उक्तः । सांप्रतं तत्प्रदानविधिमनुवर्णयिष्यामः ॥ ५ ॥**

इति ॥ ननु धर्मः स्वचित्तपरिशुद्ध्यधीनः, तत्किमस्यैवंग्रहणेनेत्याशङ्क्याह ।

**धर्मग्रहणं हि सत्प्रतिपत्तिमद्विमलभावकरणम् ॥ ५ ॥**

इति ॥ धर्मग्रहणमुक्तलक्षणम् । हिर्यस्मात् । सत्प्रतिपत्तिमद्दृढशक्तिपर्यालोचनादिना शुद्धाभ्युपगमवत् । किमित्याह "विमलभावकरणं" स्वफलप्रसाधनावन्ध्यपरिणामनिमित्तं संपद्यत इत्येवमस्य ग्रहणविधिर्वक्तुमुपक्रम्यत इति ॥

तदेव कथं संपद्यत इत्याह ।

**तच्च प्रायो जिनवचनतो विधिना ॥ ६ ॥**

इति ॥ तच्च तत्पुनः सत्प्रतिपत्तिमद्धर्मग्रहणम् । प्रायो बाहुल्येन मरुदेव्यादौ क्वचिदन्यथापि संभवात् । जिनवचनतो वीतरागशास्त्राद्यो विधिर्वक्ष्यमाणस्तेन संपद्यत इति ॥

एवं सति यत्संजायते तदाह ।

**इतिप्रदानफलवत्ता ॥ ७ ॥**

इति ॥ इत्येवं सत्प्रतिपत्तिमतो विधिना धर्मग्रहणस्य विमलभावनिबन्धनतायां सत्याम् । प्रदानस्य वितरणस्य धर्मगोचरस्य गुरुणा क्रियमाणस्य । शिष्यफलवत्ता शिष्यानुग्रहरूपफलयुक्तत्वमुपपद्यते । अन्यथोषरवसुन्धराबीजवपनमिव निष्फलमेव स्यादिति ॥

प्राणिविशेषतो धर्मो ग्राह्यतयोक्तस्तत्र च प्रायोऽभ्यस्तश्रावकधर्मो यतिधर्मयोग्यो भवतीति गृहस्थधर्मग्रहणविधिमेवादौ बिभणिषुरिदमाह ।

**सति सम्यग्दर्शने न्याय्यमणुव्रतादीनां ग्रहणं नान्यथा ॥ ८ ॥**

इति ॥ सति विद्यमाने सम्यग्दर्शने सम्यक्त्वलक्षणे न्याय्यमुपपन्नमणुव्रतादीनामणुव्रतगुणव्रतशिक्षाव्रतानां ग्रहणमभ्युपगमः । न नैवान्यथा सम्यग्दर्शनेऽसति, निष्फलत्वप्रसङ्गात् । यथोक्तम् ।

सस्यानीवोषरक्षेत्रे निक्षिप्तानि कदाचन ।
न व्रतानि प्ररोहन्ति जीवे मिथ्यात्ववासिते ॥ १ ॥
संयमा नियमाः सर्वे नाश्यन्तेऽनेन पावनाः ।
क्षयकालानलेनेव पादपाः फलशालिनः ॥ २ ॥

इति ॥ सम्यग्दर्शनमेव यथा स्यात्तथाह ।

**जिनवचनश्रवणादेः कर्मक्षयोपशमादितः सम्यग्दर्शनम् ॥ ९ ॥**

इति ॥ जिनवचनश्रवणं प्रतीतिरूपमेव । आदिशब्दात्तथाभव्यत्वपरिपाकादितो जीववीर्यविशेषलक्षणो निसर्गो गृह्यते । ततो जिनवचनश्रवणादेः सकाशात् कर्मक्षयोपशमादेः कर्मणो ज्ञानावरणदर्शनावरणमिथ्यात्वमोहादेः क्षयोपशमोपशमक्षयलक्षणो गुणस्तस्मात्, सम्यग्दर्शनं तत्त्वश्रद्धानलक्षणं विपर्ययव्यावृत्तिकार्यसदभिनिवेशशून्यं शुद्धवस्तुप्रज्ञापनानुगतं निवृत्ततीव्रसंक्लेशमुत्कृष्टबन्धाभावकृच्छुभात्मपरिणामरूपं समुज्जृम्भते । कर्मक्षयादिरूपं चेत्यमवसेयम् ।

खीणो निव्वायहुयासणो व्व छारपिहिय व्व उवसन्ता ।
दरविज्झायविहाडियजलणोवम्मा खओवसमा ॥

विघाटित इतीतस्ततो विप्रकीर्ण इति ॥

कीदृशमित्याह ।

**प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तत् ॥ १० ॥**

इति ॥ प्रशमः स्वभावत एव क्रोधादिक्रूरकषायविषविकारकटुफलावलोकनेन वा तन्निरोधः । संवेगो निर्वाणाभिलाषः । निर्वेदो भवादुद्विजनम् । अनुकम्पा दुःखितसत्त्वविषया कृपा । आस्तिक्यं "तदेव सत्यं यज्जिनैः प्रवेदितं" इति प्रतिपत्तिलक्षणम् । ततः प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यानामभिव्यक्तिरुन्मीलनं लक्षणं स्वरूपसत्ताख्यापकं यस्य तत्तथा तदिति सम्यग्दर्शनम् ॥

एवं सम्यग्दर्शनशुद्धौ यद्गुरुणा विधेयं तदाह ।

**उत्तमधर्मप्रतिपत्त्यसहिष्णोस्तत्कथनपूर्वमुपस्थितस्य विधिनाणुव्रतादिदानम् ॥ ११ ॥**

इति ॥ इह भव्यस्य भवभीरोर्धर्मग्रहणोद्यममवलम्बमानस्य गुरुणा प्रथमं क्षमामार्दवादिर्यतिधर्मः सप्रपञ्चमुपवर्ण्य, प्रदातुमुपस्थानीयस्तस्यैव सर्वकर्मरोगविरेचकत्वाद्यदासावपि विषयसुखपिपासादिभिरुत्तमस्य क्षमामार्दवादेर्यतिधर्मस्य प्रति-

पत्तिरभ्युपगमस्तस्यामसहिष्णुरक्षमः, तदा तस्य तत्कथनपूर्वं स्वरूपभेदादिभिस्तेषामणुव्रतादीनां कथनं प्रकाशनं पूर्वं प्रथमं यत्र तत्तथा । क्रियाविशेषणमेतत् । उपस्थितस्य ग्रहीतुमभ्युद्यतस्य । किमित्याह "विधिना" वक्ष्यमाणेन "अनुव्रतादिदानं" कर्तव्यमिति ॥

अन्यथाप्रदाने दोषमाह ।

**सहिष्णोः प्रयोगेऽन्तरायः ॥ १२ ॥**

इति ॥ सहिष्णोरुक्तसधर्मप्रतिपत्तिसमर्थस्य प्रयोगेऽणुव्रतादिप्रदानव्यापारेणान्तरायश्चारित्रप्रतिपत्तेः कृतो गुरुणा भवति । स च भवान्तर आत्मनश्चारित्रदुर्लभत्वनिमित्तमिति ॥

अत्रैवोपचयमाह ।

**अनुमतिश्चेतरत्र ॥ १३ ॥**

इति ॥ अनुमतिरनुज्ञादोषः । चकारो दूषणान्तरसमुच्चये । इतरत्राणुव्रतादिप्रतिपत्तौ प्रत्याख्यातसावद्यांशाद्योऽन्योऽप्रत्याख्यातः सावद्यांशस्तत्रोत्पद्यते । तथा च गुरोर्यावज्जीवं सर्वथा सावद्यपरिहारप्रतिज्ञाया मनाग्मालिन्यं स्यादिति तत्कथनपूर्वकमित्युक्तम् ॥

अथैतद्व्यतिरेकदोषमाह ।

**अकथन उभयाफल आज्ञाभङ्गः ॥ १४ ॥**

इति ॥ यद्युक्तमधर्मप्रतिपत्त्यसहिष्णोरणुव्रतादिलक्षणं धर्मं

न कथयति गुरुः, तदाकथने उभयं यतिश्रावकधर्मलक्षणं न फलं यस्यासावुभयाफल आज्ञाभङ्गो भगवच्छासनविनाशनमत्यन्तदुरन्तं जायत इति । भगवदाज्ञा चेयम् ।

श्रममविचिन्त्यात्मगतं तस्माच्छ्रेयः सदोपदेष्टव्यम् ।
आत्मानं च परं च हि हितोपदेष्टानुगृह्णाति ॥ १ ॥

इति ॥

ननु सर्वसावद्ययोगप्रत्याख्यानासमर्थस्याणुव्रतादिप्रतिपत्तौ सावद्यांशप्रत्याख्यानप्रदाने कथमितरत्रांशे नानुमतिदोषप्रसङ्गो गुरोरित्याशङ्क्याह ।

**भगवद्वचनप्रामाण्यादुपस्थितदाने दोषाभावः ॥ १५ ॥**

इति ॥ उपासकदशादौ हि भगवता स्वयमेवानन्दादिश्रमणोपासकानामणुव्रतादिप्रदानमनुष्ठितमिति श्रूयते । न च भगवतोऽपि तत्रानुमतिप्रसङ्ग इति प्रेर्यं, भगवदनुष्ठानस्य सर्वाङ्गसुन्दरत्वेनैकान्ततो दोषविकलत्वादिति भगवतो वचनस्य प्रामाण्यादुपस्थितस्य ग्रहीतुमुद्यतस्य जन्तोरणुव्रतादिप्रदाने साक्षिमात्रभावमवलम्बमानस्य सावद्यांशानिरोधेनापि नानुमतिप्रसङ्गो गुरोः, प्रागेव तस्य स्वयमेव तत्र प्रवृत्तत्वादिति ॥

कुत एतदिति चेदुच्यते ।

**गृहपतिपुत्रमोक्षज्ञातात् ॥ १६ ॥**

इति ॥ 'गृहपतेर्वक्ष्यमाणकथानकाभिधास्यमाननामधेयस्य

श्रेष्ठिनः राजगृहाद्यः पुत्राणां मोक्षो विमोचनं तदेव ज्ञातं दृष्टान्तस्तस्मात्। भावार्थस्तु कथानकगम्यः। तच्चेदम्॥

कथा॥ 'अस्ति सकलसुरसुन्दरीमनोहरविलासोपहासप्रदानप्रवणसीमन्तिनीजनकटाक्षकटाक्षेपोपलक्ष्यमाणनिखिलरामणीयकप्रदेशो देशो मगधाभिधानः। तत्र च तुषारगिरिशिखरधवलप्रासादमालाविमलकूटकोटिभिरकालेऽपि शरदभ्रलीलां कुर्वाणमिव बभूव वसन्तपुरं नाम नगरम्। तस्य च पालयिता सेवावसरसरभसप्रणतनिखिलभूपालविमलमौलिमुकुटकोटीविलग्नमाणिक्यमयूखव्राताभिरञ्जितक्रमकमलयुगः, चण्डदोर्दण्डव्यापारितमण्डलाग्रखण्डितारातिमत्तमातङ्गकुम्भस्थलगलितमुक्ताफलप्रकरप्रसाधिताशेषसंग्राममहीमण्डलः समजायत जितशत्रुनामा नृपतिः। तस्य च सकलजननयनमनोहारिणी पूर्वभवपरंपरोपार्जितपुण्यप्राग्भारनिर्मापितफलसम्बन्धानुकारिणी विबुधवधूविलासावलेपापहारिणी बभूव प्रेयसी धारिणी। तया च सार्धमसौ महीपतिः प्रणताशेषक्षितिपतिर्दूरतोनिराकृतनिकृतिर्मनोहरपञ्चप्रकारभोगान् भुञ्जानो महान्तमनेहसमनैषीत्। इतश्च तत्रैव पुरे प्रचुरतरद्विपदचतुष्पदापदहिरण्यसुवर्णधनधान्यशङ्खशिलामुक्ताप्रवालपद्मरागवैडूर्यचन्द्रकान्तेन्द्रनीलमहानीलराजपट्टप्रभृतिप्रवरपदार्थपरिपूर्णसमृद्धिसमुपहसितश्रीकण्ठसखदर्पोद्रेको दीनानाथान्धपङ्गुप्रमुखप्राणिप्रणाशिताशेषशोकः समजनि समुद्रदत्ताभिधानो निखिलवणिग्वर्गप्रधानो गुणगणगरिष्ठः श्रेष्ठी। तस्य चास्य

इव लावण्यगुणानां, उदाहरणमिव सर्वश्रेयोवस्तूनां, महानिधानमिव पुण्यरत्नानां, भूषणमिव स्वकुलसन्ततेः, पादप इव सौकुमार्यवनलतायाः, समभवत्सुमङ्गलाभिधाना सधर्मचारिणी । तस्यामसौ निविडबद्धानुरागो जीवलोकोद्भवप्राज्यवैषयिकशर्मसागरोदरमध्यमग्नोऽनल्पं कालमतिवाहयांचकार । प्रस्तावे च समजनिषत तयोर्विशदसमाचारसमाचरणपवित्राः पुत्राः क्रमेण प्रियंकर-क्षेमंकर धनदेव-सोमदेव-पूर्णभद्र-मणिभद्रनामानः । षट् ते च निसर्गत एव गुरुजनविनयपरायणाः परमकल्याणप्रदानप्रवणपरिशुद्धत्रिवर्गबद्धानुरागा अनुरागभरसमाकृष्यमाणकीर्तिकामिनीबाढोपगूढाः सकलसज्जनमनःसंतोषकातुच्छसमुच्छलद्दयादाक्षिण्यप्रायःप्राज्यगुणालंकृतशरीराः शरीरसौन्दर्योत्कर्षतिरस्कृतमकरकेतनलावण्यदर्पातिरेका वणिग्जनोचितव्यवहारसारतया पितरमतिदूरमतिक्रान्तकुटुम्बचिन्ताभारमकार्षुः ॥ अन्यदा च धारिणी देव्यन्तःपुरान्तर्नरपतौ पटुपटहप्रवादनप्रवृत्तेऽनेककरणभङ्गसङ्गसुन्दरं राजहृदयानन्दातिरेकदायकं नृत्यविधिं व्यधात् । ततः संतोषभरतरलितमना महीपतिः प्रियायै वरं प्रायच्छत् । सा चोवाच । "अद्यापि तवान्तिक एव वरस्तिष्ठतु प्रस्तावे याचिष्यते" इति । एवं च गच्छति काले समायया-वन्यदा कामुकलोकविलासोल्लासमाहात्म्यकारी कौमुदीदिवसः । विज्ञाप्तश्च देव्या वसुन्धराधिपतिः । "देव क्रियतां वरेण प्रसादः । यथाद्य कर्पूरप्रतिभशशधरकरनिकरपरिपूरित-

निखिलाशायां निशायामिमां नगरीं गरीयसा स्वपरिवारेण शेषान्तःपुरेण च परिकरिता सती त्रिकचतुष्कादिरमणीयप्रदेशसौन्दर्यावलोकनकुतूहलेनास्खलितप्रसरा परिभ्रमामि" इति। तदन्वेव राजा सर्वत्र नगरे पटहप्रदानपूर्वकं सकलपुरुषवर्गीणां रजनिनगरनिर्गमनाज्ञामुद्घोषयामास। ततः प्रातःक्षणादारभ्य यथासंवाहं सर्वेष्वपि पुरुषेषु नगराद्बहिर्गन्तुं प्रवृत्तेषु समुचितसमये स्वयमेव महीपतिर्मन्त्रिप्रमुखनगरप्रधाननरपरिकरपरिकरितो नगराद्बहिरीशानदिग्भागवर्तिनि मनोरमे उद्याने जगाम। ते च षडपि श्रेष्ठिसूनवो लेख्यककरणव्यग्रा एते व्रजाम एते व्रजाम इति निविडबद्धाभिसंधयोऽपि सन्ध्यासमयं यावदापण एव तस्थुः। इतश्चास्ताचरचूलामलञ्चकार सहस्रकरः। ते च त्वरापरिगता यावदायान्ति गोपुरसमीपे तावत्तज्जीविताशयेव महोभयकपाटपुटसंघटनेन निरुद्धानि प्रतोलीद्वाराणि। तदनु चकितचकिताः केनाप्यलक्ष्यमाणास्ते प्रत्यावृत्त्य हट्टान्तर्गुप्तभूमिगृहैकदेशे निर्लिल्यिरे। धारिण्यपि राज्ञी कृतोदारशृङ्गारान्तःपुरेण सह निर्गतनरे नगरे यथाभिप्रायमभिरेमे। सञ्जाते प्रातःसमये समुत्थिते कमलखण्डप्रबोधप्रदानप्रवणे किंशुककुसुमसच्छायातुच्छोच्छलद्रागरञ्जितदिग्मण्डले जगदेकनेत्रे मित्रे नगराभ्यन्तरमप्रविष्टेष्वेव पुरुषेषु महीपालो नगरारक्षकानादिदेश यथा। "निभालयत नगरं मा न कश्चिदस्मदाज्ञाभङ्गकारी मानवः समजनि" इति। सम्यग्गवेषयद्भिश्च तैः कृतान्तदूतैरिव प्रापिरे श्रेष्ठिनन्दना निवेदिताश्च

तत्समयमेव राज्ञः । ततोऽसौ कुपितकृतान्तभीषणभ्रूकुटिभङ्गभङ्गिललाटपट्टमाधाय तच्छ्रेष्ठिपुत्रवधाय तान्व्यापारयांचकार । अत्रान्तरे समाकर्ण्याकाण्ड एव मुद्गराघातपातसदृशमेनं वृत्तान्तं श्रेष्ठी श्रान्त इव भ्रान्त इव पीडित इव करिमकरनिकरकरास्फालनसमुच्छलदुद्दलकल्लोलाकुलितमहाजलनिधिमध्यसंभिन्नयानपात्रान्तर्लीयमानमानव इव किंकर्तव्यतामूढः क्षण कामप्यवस्थां दारुणामन्वभूत् । तदनु निराकृत्य कातरनरविजृम्भितमपास्य स्त्रीजनोचितं शोकवेगं समालम्ब्य धीरनरोचितं धैर्यमवगण्य दीनभावं नगरप्रधानान्यलोकसहायः प्रवररत्नभृतभाजनव्यग्रपाणिः सहसैव राज्ञो विज्ञापनायोपतस्थौ विज्ञप्तवांश्च । यथा । "देव न कुतोऽपि चित्तदोषादमी मत्पुत्रा नगराद्निर्गमभाजो बभूवुः, किं तु तथाविधलेख्यकव्यग्रतया निर्गन्तुमपारयतामादित्यास्तसमयसमयागमे च प्रचलितानामप्यमीषां प्रतोलीद्वारपिधानवशेन निर्गमो नाभूत् । अतः क्षम्यतामेकोऽपराधः क्रियतां प्रियपुत्रजीवितव्यप्रदानेन प्रसादः" । एवं च पुनः पुनर्भण्यमानोऽपि राजावन्ध्यकोपमात्मानं मन्यमानो यदा न मोक्तुमुत्सहते तदा तत्कोपनिर्यापणायैकपुत्रोपेक्षणेन पञ्च मोचयितुमारब्धाः, यदा तानपि न मुञ्चति तदा द्वयोपेक्षणेनैव चत्वारः; एवं तदमोचनेऽपि त्रयो द्वौ यावच्छेषोपेक्षणेनैको ज्येष्ठ इति । ततः सन्निहितामात्यपुरोहिताद्यत्यन्ताभ्यर्थनेन निर्मूलकुलोच्छेदो महते पापायेति पर्यालोचनेन च मनाग्मन्दीभूतकोपोद्रेको महीपतिर्ज्येष्ठपुत्रमेकं मुमोचेति ॥

अथमत्रार्थोपनयः। यथा तद्वसन्तपुरं नगरं तथा संसारः। यथा राजा तथा श्रावकः। यथा श्रेष्ठी तथा गुरुः। यथा च षट् पुत्रास्तथा षड् जीवनिकायाः। यथा च तस्य पितुः शेषपुत्रोपेक्षणेनैकं पुत्रं मोचयतोऽपि न शेषपुत्रवधानुमतिः, एवं गुरुर्निजपुत्रप्रायान् षडपि जीवनिकायांस्तैस्तैः प्रव्रज्योत्साहनोपायैर्गृहस्थतया तद्वधप्रवृत्ताच्छ्रावकान्मोचयति। यदा चासौ नाद्यापि तान्मोक्तुमुत्सहते तदा ज्येष्ठपुत्रप्रायं त्रसकायं शेषोपेक्षणेन मोचयतोऽपि गुरोर्न शेषकायवधानुमतिदोष इति॥

विधिनाणुव्रतादिप्रदानमित्युक्तं प्रागतस्तमेव दर्शयति।

## योगवन्दननिमित्तदिगाकारशुद्धिविधिः॥ १७॥

इति॥ इह शुद्धिशब्दः प्रत्येकमभिसंबन्ध्यते। ततो योगशुद्धिर्वन्दनशुद्धिर्निमित्तशुद्धिर्दिक्शुद्धिराकारशुद्धिश्च विधिरणुव्रतादिप्रतिपत्तौ भवति। तत्र योगाः कायवाङ्मनोव्यापारलक्षणाः, तेषां शुद्धिः सोपयोगान्तरगमनेनिरवद्यभाषणशुभचिन्तनादिरूपा। वन्दनशुद्धिरस्खलितामिलितप्रणिपातादिदण्डकसमुच्चारणासंभ्रान्तकायोत्सर्गकरणलक्षणा। निमित्तशुद्धिस्तत्कालोच्छलितशङ्खपणवादिनिनादश्रवणपूर्णकुम्भभृङ्गारच्छत्रध्वजचामराद्यवलोकनशुभगन्धाघ्राणादिस्वभावा। दिक्शुद्धिः प्राच्युदीचीजिनजिनचैत्याद्यधिष्ठिताशासमाश्रयणस्वरूपा। आकारशुद्धिस्तु राजाद्यभियोगादिप्रत्याख्यानापवादमुक्तीकरणात्मिकेति॥

तथा ।

**उचितोपचारश्च ॥ १८ ॥**

इति ॥ उचितो देवगुरुसाधर्मिकस्वजनदीनानाथादीनामुपचारार्हाणां यो यस्य योग्य उपचारो धूपपुष्पवस्त्रविलेपनासनादानादिगौरवात्मकः । स च विधिरित्यनुवर्त्तत इति ॥

अथाणुव्रतादीन्येव क्रमेण दर्शयन्नाह ।

**स्थूलप्राणातिपातादिभ्यो विरतिरणुव्रतानि पञ्च ॥ १९ ॥**

इति ॥ प्राणातिपातः प्रमत्तयोगात्प्राणिव्यपरोपणरूपः । स च स्थूलः सूक्ष्मश्च । तत्र सूक्ष्मः पृथिव्यादिविषयः स्थूलश्च द्वीन्द्रियादित्रसगोचरः । स्थूलश्चासौ प्राणातिपातश्चेति स्थूलप्राणातिपातः । आदिशब्दात्स्थूलमृषावादादत्तादानाब्रह्मपरिग्रहाः परिगृह्यन्ते । ते च प्रायः प्रतीतरूपा एव । ततस्तेभ्यः स्थूलप्राणातिपातादिभ्यः पञ्चभ्यो महापातकेभ्यो विरतिर्विरमणम् । किमित्याह । साधुव्रतेभ्यः सकाशादणूनि लघूनि व्रतानि नियमरूपाण्यणुव्रतानि । कियन्तीत्याह "पञ्च" इति पञ्चसंख्यानि पञ्चाणुव्रतानीति बहुवचननिर्देशेऽपि यद्विरतिरित्येकवचननिर्देशः स सर्वत्र विरतिसामान्यापेक्षयेति ॥

तथा ।

**दिग्व्रतभोगोपभोगमानानर्थदण्डविरतयस्त्रीणि गुणव्रतानि ॥ २० ॥**

इति ॥ दिशो ह्यनेकप्रकाराः शास्त्रे वर्णिताः । तत्र

सूर्योपलक्षिता पूर्वा शेषाश्च पूर्वदक्षिणादिकाः सप्त। तथो-र्ध्वमधश्च इ। एवं दशसु दिक्षु विषये गमनपरिमाण-करणलक्षणं व्रतं नियमो दिग्व्रतम्। भुज्यते सकृदेवा सेव्यते यदशनादि तद्भोगः। पुनः पुनर्भुज्यते वसनवनितादि यत्त-दुपभोगः। भोगश्चोपभोगश्च भोगोपभोगौ; तयोर्मानं परिमाणं भोगोपभोगमानम्। अर्थः प्रयोजनं धर्मस्वजनेन्द्रिय-गतशुद्धोपकारस्वरूपं; तस्मा अर्थाय दण्डः सावद्यानुष्ठानरूपः, तत्प्रतिषेधादनर्थदण्डः। स च चतुर्धा, अपध्यानप्रमादाचरित-हिंस्रप्रदानपापकर्मोपदेशभेदात्। तस्य विरतिः। ततो दिग्व्रतं च भोगोपभोगमानं चानर्थदण्डविरतिश्चेति समासः। त्रीणि त्रिसंख्यानि गुणव्रतानि गुणायोपकाराय व्रतानि भवन्ति, गुणव्रतप्रतिपत्तिमन्तरेणाणुव्रतानां तथाविधशुद्ध्यभावादिति॥

तथा।

## सामायिकदेशावकाशिकपोषधोपवासातिथिसं-विभागाश्चत्वारि शिक्षापदानि॥ २१॥

इति॥ समानां मोक्षसाधनं प्रति सदृशसामर्थ्यानां सम्यग्दर्शनज्ञानचारित्राणामायो लाभः, समस्य वा राग-द्वेषान्तरालवर्तितया मध्यस्थस्य सत आयः सम्यग्दर्शनादिलक्षणः समायः, साम्नो वा सर्वजीवमैत्रीभावलक्षणस्यायः सामायः। सर्वत्र स्वार्थिके कप्रत्ययोपादानात्सामायिकम्। सावद्ययोग-परिहारनिरवद्ययोगानुष्ठानरूपो जीवपरिणामः॥

देशे विभागे प्राक्प्रतिपन्नदिग्व्रतस्य योजनशतादिपरिमाणरूपस्यावकाशो गोचरो यस्य प्रतिदिनं प्रत्याख्येयतया तत्तथा ॥

पोषं धत्ते पोषधोऽष्टमीचतुर्दश्यादिः पर्वदिवसः । उपेति सहोपावृत्तदोषस्य सतो गुणैराहारपरिहारादिरूपैर्वास उपवासः । यथोक्तम् ।

उपावृत्तस्य दोषेभ्यः सम्यग्वासो गुणैः सह ।
उपवासः स विज्ञेयो न शरीरविशोषणम् ॥ १ ॥

ततः पोषधेषूपवासः ॥

अतिथयो वीतरागधर्मस्थाः साधवः साध्व्यः श्रावकाः श्राविकाश्च ; तेषां न्यायागतकल्पनीयादिविशेषणानामन्नपानादीनां संगतवृत्त्या विभजन वितरणमतिथिसंविभागः । तथा चोमास्वातिवाचकविरचितश्रावकप्रज्ञप्तिसूत्रम् । यथा । अतिथिसंविभागो नाम । अतिथयः साधवः साध्व्यः श्रावकाः श्राविकाश्च ; एतेषु गृहमुपागतेषु भक्त्याभ्युत्थानासनदानपादप्रमार्जननमस्कारादिभिरर्चयित्वा यथाविभवशक्ति, अन्नपानवस्त्रौषधालयादिप्रदानेन संविभागः कार्य इति ॥

ततः सामायिकं च देशावकाशं च पोषधोपवासश्चातिथिसंविभागश्चेति समासः । चत्वारीति चतुःसंख्यानि । किमित्याह "शिक्षापदानि"। शिक्षा साधुधर्माभ्यासः, तस्य पदानि स्थानानि भवन्ति ॥

ततश्च ।

**एतदारोपणं दानं यथार्हं साकल्यवैकल्याभ्याम् ॥ २२ ॥**

इति ॥ इहैतेषामणुव्रतादीनां प्रागुक्तलक्षणे धर्मार्हे प्राणिनि यदारोपणमुक्तविधिनैव निक्षेपणम् । तत्किमित्याह "दानं" प्रागुपन्यस्तमभिधीयते । कथमित्याह "साकल्यवैकल्याभ्यां" साकल्येन समस्ताणुव्रतगुणव्रतशिक्षापदाध्यारोपणलक्षणेन, वैकल्येन चाणुव्रतादीनामन्यतमारोपणेनेति ॥

एवं सम्यक्त्वमूलेष्वणुव्रतादिषु समारोपितेषु यत्करणीयं तदाह ।

**गृहीतेष्वनतिचारपालनम् ॥ २३ ॥**

इति ॥ गृहीतेषु प्रतिपन्नेषु सम्यग्दर्शनादिषु गुणेषु । किमित्याह "अनतिचारपालनं" इति । अतिचारो विराधना देशभङ्ग इत्येकोऽर्थः । अविद्यमानोऽतिचारो येषु तान्यनतिचाराणि । तेषामनुपालनं धरणं कार्यम् । अतिचारदोषोपघातेन हि कुवातोपहतसस्यानामिव स्वफलप्रसाधनं प्रत्यसमर्थत्वादमीषामित्यनतिचारपालनमित्युक्तम् ॥

अथातिचारानेवाह ।

**शङ्काकाङ्क्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतिचाराः ॥ २४ ॥**

इति ॥ शङ्का काङ्क्षा विचिकित्सा च । ज्ञानाद्याचार-

कथनमिति सूत्रव्याख्यानोक्तलक्षणेन । अन्यदृष्टीनां सर्वज्ञप्रणीतदर्शनव्यतिरिक्तानां शाक्यकपिलकणादाक्षपादादिप्रणीतमतवर्तिनां पाषण्डिनां प्रशंसासंस्तवावन्यदृष्टिप्रशंसासंस्तवौ । तत्र "पुण्यभाज एते" "सुलब्धमेषां जन्म" "दयालव एते" इत्यादिका प्रशंसा । संस्तवश्चेह संवासजनितः परिचयो वसनभोजनदानालापादिलक्षणः परिगृह्यते न स्तवरूपः । तथा च लोके प्रतीत एव संपूर्वः स्तौतिः परिचयेऽसंस्तुतेषु प्रसभं भयेष्वित्यादाविवेति । ततः शङ्का च काङ्क्षा च विचिकित्सा चान्यदृष्टिप्रशंसासंस्तवौ चेति समासः । किमित्याह "सम्यग्दृष्टेः" सम्यग्दर्शनस्य "अतिचाराः" विराधनाप्रकाराः संपद्यन्ते, शुद्धतत्त्वश्रद्धानबाधाविधायित्वादिति ॥

तथा ।

**व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥ २५ ॥**

इति ॥ व्रतेष्वणुव्रतेषु शीलेषु च गुणव्रतशिक्षापदलक्षणेषु पञ्च पञ्च यथाक्रमं यथापरिपाट्यतिचारा "भवन्ति" इति सर्वत्रानुवर्तत इति ॥

तत्र प्रथमाणुव्रते ।

**बन्धवधच्छविच्छेदातिभारारोपणान्नपाननिरोधाः ॥ २६ ॥**

इति ॥ स्थूलप्राणातिपातविरतिलक्षणस्याणुव्रतस्य बन्धः,

वधः, छविच्छेदः, अतिभारारोपणं, अन्नपाननिरोधश्चेत्यतिचाराः ॥ तत्र बन्धो रज्जुदामनकादिना संयमनं; वधः कशादिभिर्हननं; छविस्त्वक्तद्योगाच्छरीरमपि छविस्तस्य छेदोऽसिपुत्रिकादिभिः पाटनं; तथातीव भारोऽतिभारः प्रभूतस्य पूगफलादेर्गवादिपृष्ठादावारोपणं; तथान्नपानयोर्भोजनोदकयोर्निरोधो व्यवच्छेदोऽन्नपाननिरोधः । एते च क्रोधलोभादिकषायमलकलङ्कितान्तःकरणस्य प्राणिप्राणप्रहाणनिरपेक्षस्य सतो जन्तोरतिचारा भवन्ति, सापेक्षस्य तु बन्धादिककरणेऽपि सापेक्षत्वान्नातिचारत्वमेषामिति ॥

अत्र चायमावश्यकचूर्ण्युक्तो विधिः । बन्धो द्विपदानां चतुष्पदानां वा स्यात् । सोऽप्यर्थायानर्थाय वा । तत्रानर्थाय, तावन्नासौ विधातुं युज्यते । अर्थाय पुनरसौ द्विविधः स्यात् । सापेक्षो निरपेक्षश्च । तत्र निरपेक्षो नाम यन्निश्चलमत्यर्थं बध्यते । सापेक्षः पुनर्यद्दामग्रन्थिना यश्च बद्धः सन् शक्यते प्रदीपनकादिषु विमोचयितुं वा छेत्तुं वा, एवं तावच्चतुष्पदानां बन्धः । द्विपदानां पुनरेवम् । दासो वा दासी वा चौरो वा पाठादिप्रमत्तपुत्रो वा यदि बध्यते तदा स विक्रमेणैव बन्धनीयो रक्षणीयश्च तथा यथाग्निभयादिषु न विनश्यति । तथा ते किल द्विपदचतुष्पदाः श्रावकेण संग्रहीतव्या येऽबद्धा एवासत इति ॥

वधोऽपि तथैव । नवरं निरपेक्षवधो निर्दयताडना, सापेक्षवधः पुनरेवमादित एव भीतपर्षदा श्रावकेण भवित

यदि पुनर्न करोति कोऽपि विनयं तदा तं मर्माणि मुक्त्वा लतया दवरकेण वा सकृद्द्विर्वा ताडयेदिति ॥

छविच्छेदोऽपि तथैव । नवरं निरपेक्षो हस्तपादकर्णनासिकादि यन्निर्दयं छिनत्ति । सापेक्षः पुनर्यद्गण्डं वारुर्वा छिन्द्याद्वा दहेद्वेति ॥

तथातिभारो नारोपयितव्यः पूर्वमेव हि यावद्द्विपदादिवाहनेन जीविका सा श्रावकेण मोक्तव्या, अन्यथासौ न भवेत्, तदा द्विपदोऽयं भारं स्वयमुत्क्षिपत्यवतारयति च तं वाह्येत । चतुष्पदस्य तु यथोचितभारादसौ किञ्चिदूनः क्रियते हलशकटादिषु पुनरुचितवेलायामसौ मुच्यत इति ॥

तथा भक्तपानव्यवच्छेदो न कस्यापि कर्तव्यः । तीक्ष्णबुभुक्षो ह्यन्यथा म्रियते । सोऽप्यर्थानर्थादिभेदो बन्धवद्द्रष्टव्यः । नवरं सापेक्षो रोगचिकित्सार्थं स्यात् । अपराधकारिणि च वाचैव वदेदद्य ते न दास्यते भोजनादि शान्तिनिमित्तं चोपवासं कारयेत् । किं बहुना । यथा मूलगुणस्य प्राणातिपातविरमणस्यातिचारो न भवति तथा सर्वत्र यतनया यतितव्यमिति ॥

ननु प्राणातिपात एव व्रतिना प्रत्याख्यातः ; ततो बन्धादिकरणेऽपि न दोषः, विरतेरखण्डितत्वात् । अथ बन्धादयो ऽपि प्रत्याख्याताः ; तदा तत्करणे व्रतभङ्ग एव, विरतिखण्डनात् । किं च । बन्धादीनां प्रत्याख्येयत्वेऽपि विवक्षितव्रतेयत्ता विशीर्यते, प्रतिव्रतं पञ्चानामतिचारव्रता-

नामाधिक्यादित्येवं न बन्धादीनामतिचारतेति ॥ अत्रोच्यते । सत्यं प्राणातिपात एव प्रत्याख्यातो न बन्धादयः ; केवलं तत्प्रत्याख्यानेऽर्थतस्तेऽपि प्रत्याख्याता इव द्रष्टव्याः, तदुपायत्वात्तेषाम् । न च बन्धादिकरणेऽपि व्रतभङ्गः, किं त्वतिचार एव । कथम् । इह द्विविधं व्रतं, अन्तर्वृत्त्या बहिर्वृत्त्या च । तत्र मारयामीति विकल्पाभावेन यदा कोपाद्यावेशात्परप्राणप्रहाणमवगणयन् बन्धादौ प्रवर्तते न च प्राणघातो भवति, तदा दयावर्जिततया विरत्यनपेक्षप्रवृत्तत्वेनान्तर्वृत्त्या व्रतस्य भङ्गः, प्राणिघाताभावाच्च बहिर्वृत्त्या पालनमिति देशस्य भञ्जनाद्देशस्यैव च पालनादतिचारव्यपदेशः प्रवर्तते । तदुक्तम् ।

न मारयामीति कृतव्रतस्य विनैव मृत्युं क इहातिचारः ।
निगद्यते यः कुपितो वधादीन् करोत्यसौ स्यान्नियमानपेक्षः ॥१॥
मृत्योरभावान्नियमोऽस्ति तस्य कोपाद्दयाहीनतया तु भग्नः ।
देशस्य भङ्गादनुपालनाच्च पूज्या अतीचारमुदाहरन्ति ॥ २ ॥

इति ॥ यच्चोक्तं "व्रतेयत्ता विशीर्येत" इति, तदयुक्तं, विशुद्धहिंसादिविरतिसद्भावे हि बन्धादीनामभाव एवेति । तदेवं बन्धादयोऽतिचारा एवेति । बन्धादिग्रहणस्य चोपलक्षणत्वान्मन्त्रतन्त्रप्रयोगादयोऽन्येऽप्येवमत्रातिचारतया दृश्यन्त इति ॥

अथ द्वितीयस्य

**मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहारस्वदारमन्त्रभेदाः ॥ २७ ॥**

इति ॥ मिथ्योपदेशश्च रहस्याभ्याख्यानं च कूटलेखक्रिया च न्यासापहारश्च स्वदारमन्त्रभेदश्चेति समासः ॥

तत्र मिथ्योपदेशो नामालीकवादविषय उपदेशः। इदमेवं चैवं च ब्रूहीत्यादिकमसत्याभिधानशिक्षणम् ॥

रहस्याभ्याख्यानम्। रह एकान्तस्तत्रभवं रहस्यं रहोनिमित्तं तच्च तदभ्याख्यानं चेति समासः। एतदुक्तं भवति रहसि मन्त्रयमाणानवलोक्याभिधत्ते। एते हीदं चेदं च राजादिविरुद्धं मन्त्रयन्त इति ॥

कूटलेखस्यासद्भूतार्थसूचकाक्षरलेखनस्य करणं कूटलेखक्रिया ॥

न्यासापहार इति। न्यासः परगृहे रूपकादेर्निक्षेपस्तस्यापहारोऽपलापः ॥

स्वदारमन्त्रभेद इति। स्वदाराणामुपलक्षणार्थत्वान्मित्रादीनां च मन्त्रस्य गुप्तभाषितस्य भेदो बहिःप्रकाशनमिति ॥

अत्र च मिथ्योपदेशो यद्यपि मृषा न वादयामीत्यत्र व्रते भङ्ग एव न वदामीति व्रतान्तरे तु न किञ्चन, तथापि सहसाकारानाभोगाभ्यामतिक्रमव्यतिक्रमातिचारैर्वा मृषावादे परप्रवर्तनं व्रतस्यातिचारोऽयम्। अथवा व्रतसंरक्षणबुद्ध्या परवृत्तान्तकथनद्वारेण मृषोपदेशं यच्छतोऽतिचारोऽयं व्रतसव्यपेक्षत्वान्मृषावादे परप्रवर्तनाच्च भग्नाभग्नरूपत्वाद्व्रतस्येति। ननु रहस्याभ्याख्यानमसद्दोषाभिधानरूपत्वेन प्रत्याख्यातत्वाद्भङ्ग एव, न त्वतिचार इति। सत्यम्। किं तु यदा परोपघातकमना-

भोगादिनाभिधत्ते तदासंक्लेशभावेन व्रतानपेक्षत्वाभावान्न व्रतस्य भङ्गः परोपघातहेतुत्वाच्च भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः । यदा पुनस्तीव्रसंक्लेशादभ्याख्याति तदा भङ्गो व्रतनिरपेक्षत्वात् । आह च ।

सहसाभक्खाणाई जाणन्तो जइ करेज्ज तो भङ्गो ।
जइ पुण नाभोगाईहिन्तो तो होइ अइयारो ॥

कूटलेखकरणं तु यद्यपि कायेन मृषावादं न करोमीत्यस्य न करोमि न कारयामीत्यस्य वा व्रतस्य भङ्ग एव व्रतान्तरे तु न किञ्चन, तथापि सहसाकारादिनातिक्रमादिना वातिचारः । अथवा मृषावाद इति मृषाभणनं मया प्रत्याख्यातमिदं न पुनर्लेखनमिति भावनया मुग्धबुद्धेर्व्रतसव्यपेक्षस्यातिचार इति । न्यासापहारे पुनरदत्तादानं साक्षादेव भवति मृषावादव्रतातिचारत्वं चास्य न त्वदीयं मम समीपे किञ्चिदपीत्यनाभोगादिनापह्नुवानस्य स्यादिति ॥

स्वदारमन्त्रभेदः पुनरनुवादरूपत्वेन सत्यत्वाद्यद्यपि नातिचारो घटते तथापि मन्त्रितार्थप्रकाशनजनितलज्जादितः स्वदारादेर्मरणादिसंभवेन परमार्थतस्तस्यासत्यत्वात्कथंचिद्भङ्गरूपत्वादतिचार एवेति ॥

अथ तृतीयस्य ।

**स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥ २८ ॥**

इति ॥ स्तेनप्रयोगस्य तदाहृतादानं च विरुद्धराज्यातिक्रमस्य हीनाधिकमानोन्मानानि च प्रतिरूपकव्यवहारश्चेति समासः। तत्र स्तेनाश्चौराः, तेषां प्रयोगो व्यापारणं "हरत यूयं" इत्यनुज्ञाप्रदानम् । १ । तथा तैराहृतस्य कुङ्कुमादिद्रव्यस्यादानं संग्रहः । २ । विरुद्धः स्वकीयराज्ञः प्रतिपन्थी तस्य राज्यं कटकं देशो वा तत्रातिक्रमः स्वराजभूमिसीमातिलङ्घनेन क्रमणं प्रवेशो विरुद्धराज्यातिक्रमः । ३ । हीने स्वभावापेक्षया न्यूनेऽधिके वा मानोन्माने कुडवादितुलारूपे भवतो हीनाधिकमानोन्माने । ४ । शुद्धेन व्रीह्यादिना घृतादिना वा प्रतिरूपकं सदृशं पलञ्ज्यादि वसादि वा द्रव्यं, तेन व्यवहारो विक्रयरूपः, स प्रतिरूपकव्यवहार इति । ५ ॥

इह स्तेनप्रयोगो यद्यपि "चौर्यं न करोमि न कारयामि" इत्येवं प्रतिपन्नव्रतस्य भङ्ग एव, तथापि "किमधुना यूयं निर्व्यापारास्तिष्ठथ । यदि वो भक्तकादि नास्ति, तदाहं ददामि । भवदानीतमोषस्य च यदि विक्रायको न विद्यते तदाहं विक्रेष्यामि" इत्येवंविधवचनैश्चौरान् व्यापारयतः स्वकल्पनया तद्व्यापारणं परिहरतो व्रतसापेक्षस्यासावतिचारः । तथा स्तेनाहृतं काणक्रयेण लोभदोषाच्छन्नं गृह्णंश्चौरो भवति । यदाह ।

चौरश्चौरापको मन्त्री भेदज्ञः काणकक्रयी ।
अन्नदः स्थानदश्चैव चौरः सप्तविधः स्मृतः ॥ १ ॥

ततश्चौर्यकरणाद्व्रतभङ्गः "वाणिज्यमेव मया विधीयते न चौरिका" इत्यध्यवसायेन च व्रतानपेक्षत्वाभावान्नाभङ्ग इति भङ्गाभङ्गरूपोऽतिचारः ॥ विरुद्धराज्यातिक्रमस्तु यद्यपि स्वस्वामिनाननुज्ञातस्य परकटकादिप्रवेशस्य "सामीजीवादत्तं तित्थयरेणं तहेव य गुरूहिं" इत्याद्यदत्तादानलक्षणयोगेन विरुद्धराज्यातिक्रमकारिणां च चौर्यदण्डयोगेनादत्तादानरूपत्वाद्भङ्ग एव, तथापि विरुद्धराज्यातिक्रमं कुर्वता मया वाणिज्यमेव कृतं न चौर्यं" इति भावनया व्रतसापेक्षत्वाल्लोके च "चौरोऽयं" इति व्यपदेशाभावादतिचारोऽयमिति ॥ तथा हीनाधिकमानोन्मानव्यवहारः प्रतिरूपकव्यवहारश्च परव्यंसनेन परधनग्रहणरूपत्वाद्भङ्ग एव केवलं क्षात्रखननादिकमेव चौर्यं कूटतुलादिव्यवहारतत्प्रतिरूपकव्यवहारौ तु वणिक्कलैवेति स्वकीयकल्पनया व्रतरक्षणोद्यततयातिचार इति । अथवा[1] स्तेनप्रयोगादयः पञ्चाप्यमी व्यक्तचौर्यरूपैव केवलं सहसाकारादिनातिक्रमव्यतिक्रमादिना वा प्रकारेण विधीयमाना अतिचारतया व्यपदिश्यन्त इति । न चैते राजसेवकादीनां न संभवन्ति । तथाह्याद्ययोः स्पष्ट एव तेषां संभवः । विरुद्धराज्यातिक्रमस्तु । यदा सामन्तादिः स्वस्वामिनो वृत्तिमुपजीवति तद्विरुद्धस्य च सहायो भवति, तदा तस्यातिचारो भवति[2] । कूटतुला-

१ C omits from अथवा down to इति ।

२ B omits तदा तस्यातिचारो भवति ।

द्रयन्तु । यदा भाण्डागारद्रव्याणां विनिमयं कारयति, तदा राज्ञोऽप्यतिचाराः स्युरिति ॥

अथ चतुर्थाणुव्रतस्य स्वदारसंतोषलक्षणस्य[1] परदारपरिहाररूपस्य चातिचाराः[1]

**परविवाहकरणेत्वरपरिगृहीतापरिगृहीतागमनानङ्गक्रीडा[2]तीव्रकामाभिलाषाः ॥ २८ ॥**

इति ॥ इत्वरपरिगृहीता चापरिगृहीता चेत्वरपरिगृहीतापरिगृहीते, तयोर्गमने इत्वरपरिगृहीतापरिगृहीतागमने । ततः परविवाहकरणं चेत्वरपरिगृहीतापरिगृहीतागमने चानङ्गक्रीडा[1] च [2]तीव्रकामाभिलाषश्चेति समासः । इह परेषां स्वापत्यव्यतिरिक्तानां जनानां विवाहकरणं कन्याफललिप्सया स्नेहसंबन्धादिना वा परिणयनविधानं परविवाहकरणम् । इह च स्वापत्येष्वपि संख्याभिग्रहो न्याय्यः । तथेत्वरशयनशीला भाटीप्रदानेन स्तोककालं परिगृहीतेत्वरपरिगृहीता[3] वेश्या । तथापरिगृहीता वेश्यैवागृहीतान्यसत्कभाटिः कुलाङ्गना चानाथेति तयोर्गमनमासेवनमित्वरपरिगृहीतापरिगृहीतागमनम् । तथाङ्गं देहावयवोऽपि मैथुनापेक्षया योनिर्मेहनं; तद्व्यतिरिक्तान्यनङ्गानि

---

१ C °गमनानङ्गक्रीडा ।

२ C omits.

३ B omits इत्वरपरिगृहीता, C omits परिगृहीतेत्वर ।

कुचकक्षोरुवदनादीनि, तेषु क्रीडा रमणमनङ्गक्रीडा। अथवानङ्गः कामः, तस्य तेन वा क्रीडानङ्गक्रीडा स्वलिङ्गेन निष्पन्नप्रयोजनस्याहार्यैश्चर्मादिघटितप्रजननैर्योषिदवाच्यदेशासेवनमित्यर्थः। तथा कामे कामोदयजन्यमैथुने। अथवा "सूचनात्सूत्रं" इति न्यायात्कामेषु। तत्र कामौ शब्दरूपे भोगा गन्धरसस्पर्शाः, तेषु तीव्राभिलाषोऽत्यन्ततदध्यवसायित्वम्। यतो वा जीवकरणादिनानवरतसुरतसुखार्थं मदनमुद्दीपयति, एतान् समाचरन्नतिचरति चतुर्थाणुव्रतमिति॥

इह च द्वितीयतृतीयातिचारौ स्वदारसंतोषिण एव नेतरस्य, शेषास्तु द्वयोरपीति। एतदेव च सूत्रानुपाति। यदाह। "सदारसंतोषस्स इमे पञ्च अइयारा" इत्यादि। भावना चेयमत्र। भाटीप्रदानेनेत्वरकालस्वीकारेण स्वकलत्रीकृत्य वेश्यां भुञ्जानस्य स्वकीयकल्पनया स्वदारत्वेन व्रतसापेक्षचित्तत्वान्न भङ्गः, अल्पकालपरिग्रहाच्च वस्तुतोऽस्वकलत्रत्वाद्भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः। अपरिगृहीतागमनं त्वनाभोगादिनातिक्रमादिना वातिचारः। परदारवर्जिनो नैतावतिचारावित्वरकालपरिगृहीतापरिगृहीतयोर्वेश्यात्वेनानाथकुलाङ्गनायास्त्वनाथतयैवापरदारत्वादिति। अपरे त्वाहुः। इत्वरपरिगृहीतागमनं स्वदारसंतोषवतोऽतिचारः, अपरिगृहीतागमनं तु परदारवर्जिनः। तत्र प्रथमभावना पूर्ववत्[1]।

१ C omits..

द्वितीयभावना[१] त्वेवम्। अपरिगृहीतानामेवा वेश्यानां यदा गृहीतान्यसत्कभाटिकामभिगच्छति तदा परदारगमनजन्यदोषसंभवात्कथंचित्परदारत्वाच्च भङ्गो वेश्यात्वांच्चाभङ्गो भङ्गाभङ्ग इत्यतिचारः। अन्ये पुनरन्यथाहुः।

परदारवज्जिणो पञ्च होन्ति तिन्नि उ सदारसंतुट्ठे।
इत्थीए तिन्नि पञ्च व भङ्गविगप्पेहिं नायव्वं॥

इह भावना। परेणत्वरकालं या परिगृहीता वेश्या तद्गमनमतिचारः परदारवर्जिनः कथंचित्तस्याः परदारत्वात्। तथापरिगृहीताया अनाथकुलाङ्गनाया एव यद्गमनं तस्यैवातिचारः, लोके परदारत्वेन तस्या रूढत्वात्। तत्कामुककल्पनया च परस्य भर्त्रादेरभावेनापरदारत्वात्। शेषास्तूभयोरपि स्युः। तथाहि। स्वदारसंतोषिणः स्वकलत्रेऽपि तदितरस्य तु वेश्यास्वकलत्रयोरपि यदनङ्गरतं तत्साचादप्रत्याख्यातमपि न विधेयम्। यतोऽसावत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तद्विधातुं न शक्नोति तदा यापनामात्रार्थं स्वदारसंतोषादि प्रतिपद्यते, मैथुनमात्रेणैव च यापनायाः संभवादनङ्गरतमर्थतः प्रत्याख्यातमेव। एवं परविवाहतीव्रकामाभिलाषावपीति। अतः कथंचित्प्रत्याख्यातेषु प्रवृत्तेरतिचारता तेषाम्॥ अन्ये त्वनङ्गक्रीडामेवं भावयन्ति। स हि मिथुनमेव व्रतविषय

१ B C omit एव।

इति स्वकीयकल्पनया तत्परिहरन् स्वदारसंतोषी वेश्यादौ परदारवर्जकस्तु परदारेष्वालिङ्गनादिरूपामनङ्गक्रीडां कुर्वन् कथंचिदेवातिचरति व्रतं व्रतसापेक्षत्वादिति। तथा स्वदारसंतोषवता स्वकलत्रादितरेण च स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्यं न च कारणीयमिति, एवं यदा प्रतिपन्नं व्रतं भवति, तदा परविवाहकरणतस्तत्कारणमर्थतो ऽनुष्ठितं भवति तद्व्रती च मन्यते "विवाह एवायं मया विधीयते न मैथुनं" इति ततो व्रतसापेक्षत्वादतिचार इति॥ ननु परविवाहकरणे कन्याफललिप्साकारणमुक्तम्। तत्र किं सम्यग्दृष्टिरसौ व्रती, मिथ्यादृष्टिर्वा। यदि सम्यग्दृष्टिः, तदा तस्य न सा संभवति, सम्यग्दृष्टित्वादेव[1]। अथ मिथ्यादृष्टिः, तदा मिथ्यादृष्टेरगुणव्रतानि[2] भवन्त्येवेति कथं सा परविवाहकरणलक्षणातिचारकारणमिति। सत्यम् केवलमव्युत्पन्नावस्थायां सापि संभवति। किं च। यथा भद्रकस्य मिथ्यादृशोऽपि सन्मार्गप्रवेशनायाभिग्रहमात्रं ददत्यपि गीतार्थाः, तथार्यसुहस्ती रङ्कस्य सर्वविरतिं दत्तवान्, इह च परविवाहवर्जनं स्वापत्यव्यतिरिक्तेष्वेव न्याय्यम्। अन्यथापरिणीता कन्या स्वच्छन्दचारिणी स्यात्, ततश्च शासनोपघातः स्यात्। विहितविवाहा तु कृतव्रतबन्धत्वेन न तथा स्यादिति। यच्चोक्तं "स्वापत्येष्वपि संख्याभिग्रहो

१ D omits सम्यग। २ P D omit अगुण-

न्याय्यः," तच्छिन्नकालान्तरसद्भावे सुतसंख्यापूर्तौ वापश्चान्तरोत्पत्तिपरिहारोऽपायत इति ॥ अपरे पुनराहुः[1] । परोऽन्यो यो विवाह आत्मन एव विशिष्टसंतोषाभावाद्योषिदन्तराणि प्रति विवाहान्तरकरणं तत्परविवाहकरणं, अयं च स्वदारसंतोषिण इति । स्त्रियास्तु स्वपुरुषसंतोषपरपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेणान्येषां सर्वेषां परपुरुषत्वात् । ततः परविवाहकरणानङ्गक्रीडातीव्रकामाभिलाषाः स्वदारसंतोषिण इवास्वपुरुषविषये स्युः । द्वितीयस्तु यदा स्वकीयपतिः सपत्न्या वारकदिने परिगृहीतो भवति, तदा सपत्नी वारकमतिक्रम्य तं परिभुञ्जानाया अतिचारः । तृतीयस्त्वतिक्रमादिना परपुरुषमभिसरन्त्याः समवसेयः, ब्रह्मचारिणस्त्वतिक्रमादिनातिचार इति ॥

अथ पञ्चमाणुव्रतस्य ।

**क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः ॥ ३० ॥**

इति ॥ क्षेत्रवास्तुनोर्हिरण्यसुवर्णयोर्धनधान्ययोर्दासीदासयोः कुप्यस्य च प्रमाणातिक्रमा इति समासः । तत्र क्षेत्रं सस्योत्पत्तिभूमिः, तच्च सेतुकेतूभयभेदात्त्रिविधम् । तत्र सेतुक्षेत्रमरघट्टादिसेक्यं; केतुक्षेत्रं त्वाकाशोदकनिष्पाद्यं, उभ-

१ B C त्वाहुः । २ B C omit.

यच्चेत्रं तु तद्भयनिष्पाद्यम् । वास्तु पुनरगारं ग्रामनगरादि च । तत्रागारं त्रिविधं, खातमुच्छ्रितं खातोच्छ्रितं च । तत्र खातं भूमिगृहादि; उच्छ्रितमुच्छ्रयेण कृतं, उभयं भूमिगृहस्योपरिप्रासादः । एतयोश्च क्षेत्रवास्तुनोः प्रमाणस्य क्षेत्रान्तरादिमीलनेनातिक्रमोऽतिचारो भवति । तथाहि । किलैकमेव क्षेत्रं वास्तु वेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभङ्गभयात्प्राक्तनक्षेत्रादिप्रत्यासन्नं तद्गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृत्त्याद्यपनयनेन तत्र योजयतो व्रतसापेक्षत्वात्कथंचिद्विरतिबाधनाच्चातिचार इति । तथाहि । हिरण्यं रजतं सुवर्णं हैम; एतत्परिमाणस्यान्यवितरणेनातिक्रमोऽतिचारो भवति, यथा केनापि चतुर्मासाद्यवधिना हिरण्यादिपरिमाणं विहितम् । तत्र च तुष्टराजादेः सकाशात्तदधिकं तल्लब्धं तच्चान्यस्मै व्रतभङ्गभयात्प्रददाति "पूर्णेऽवधौ गृहीष्यामि" इति भावनयेति व्रतसापेक्षत्वात्कथंचिद्विरतिबाधनाच्चातिचार इति । तथा धनं गणिमधरिममेयपरिच्छेद्यभेदाच्चतुर्विधम् । तत्र गणिमं पूगफलादि, धरिमं गुडादि, मेयं घृतादि, परिच्छेद्यं माणिक्यादि । धान्यं व्रीह्यादि; एतत्प्रमाणस्य बन्धनतोऽतिक्रमोऽतिचारो भवति । यथा हि किल कृतधनादिपरिमाणस्य कोऽपि लभ्यमन्यद्वा धनादि ददाति तच्च व्रतभङ्गभयाच्चातुर्मास्यादि "परतो गृहगतधनादिविक्रये वा कृते गृहीष्यामि" इति भावनया बन्धनेन नियन्त्रणेन

रज्ज्वादिसंयमनेन सत्यंकारदानादिरूपेण वा स्वीकृत्य तद्गृह एव स्थापयतीत्यतोऽतिचारः। तथा दासीदासप्रमाणातिक्रम इति सर्वद्विपदचतुष्पदोपलक्षणमेतत्। तत्र द्विपदं पुत्रकलत्रदासीदासकर्मकरशुकसारिकादि, चतुष्पदं गवाश्वादि। तेषां यत्परिमाणं तस्य गर्भाधानविधापनेनातिक्रमोऽतिचारो भवति। यथा किल केनापि संवत्सराद्यवधिना द्विपदचतुष्पदानां परिमाणं कृतं तेषां च संवत्सरमध्य एव प्रसवेऽधिकद्विपदादिभावाद्व्रतभङ्गः स्यादिति। तद्भयात्कियत्यपि काले गते गर्भग्रहणं कारयतो गर्भस्थद्विपदादिभावेन बहिर्गततदभावेन च कथंचिद्व्रतभङ्गादतिचारः। तथा कुप्यमानमासनशयनादिगृहोपस्करः, तस्य यन्मानं तस्य पर्यायान्तरारोपणेनातिक्रमोऽतिचारो भवति। यथा किल केनापि दश करोटकानीति कुप्यस्य परिमाणं कृतं ततस्तेषां कथंचिद्द्विगुणत्वे भूते सति व्रतभङ्गभयात्तेषां द्वयेन द्वयेनैकैकं महत्तरं कारयतः पर्यायान्तरकरणेन संख्यापूरणात्स्वाभाविकसंख्याबाधनाच्चातिचारः। अन्ये त्वाहुः। तदर्थित्वेन विवक्षितकालावधेः परतोऽहमेतत्करोटकादि कुप्यं ग्रहीष्यामि, अतो नान्यस्मै देयमिति पराप्रदेयतया व्यवस्थापयत इति यथा श्रुतत्वेन चेत्थमभ्युपगमे भङ्गातिचारयोर्न विशेषः स्यादिति तद्विशेषोपदर्शनार्थं मौलनवितरणादिना भावना दर्शितेति। यच्च क्षेत्रादिपरिग्रहस्य नवविधत्वेन संख्यातिचारप्राप्तौ पञ्चसंख्यात्वमुक्तं, तत्सजातीयत्वेन

शेषभेदानामत्रैवान्तर्भावात्, शिष्यहितत्वेन च प्रायः सर्वत्र मध्यमगतेर्विवक्षितत्वात्, पञ्चसंख्यैवातिचारपरिगणनम्। अतः क्षेत्रवास्त्वादिसंख्ययातिचाराणामगणनमुपपन्नमिति॥

अथ प्रथमगुणव्रतस्य।

ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तर्धानानि॥ ३॥

इति॥ ऊर्ध्वाधस्तिर्यग्व्यतिक्रमाश्च क्षेत्रवृद्धिश्च स्मृत्यन्तर्धानं चेति समासः। तत्रोर्ध्वाधस्तिर्यक्क्षेत्रव्यतिक्रमलक्षणास्त्रयोऽतिचाराः। एते चानयने विवक्षितक्षेत्राद्बहिः स्थितस्य वस्तुनः परहस्तेन स्वक्षेत्रप्रापणे प्रेषणे वा। ततः परेणोभये वानयनप्रेषणलक्षणे सति संपद्यन्ते। अयं चानयनादावतिक्रमो न कारयामीत्येवंविहितदिग्व्रतस्यैव संभवति तदन्यस्य त्वानयनादावनतिक्रम एव तथाविधप्रत्याख्यानाभावादिति। तथा क्षेत्रस्य पूर्वादिदिग्गतस्य दिग्व्रतविषयस्य ह्रस्वस्य सतो वृद्धिर्वर्धनं पश्चिमादिक्षेत्रान्तरपरिमाणप्रक्षेपेण दीर्घीकरणं क्षेत्रवृद्धिः। किल केनापि पूर्वापरदिशोः प्रत्येकं योजनशतं गमनपरिमाणं कृतं स चोत्पन्नप्रयोजन एकस्यां दिशि नवतिं व्यवस्थाप्यान्यस्यां ते दशोत्तरं योजनशतं करोति, उभाभ्यामपि प्रकाराभ्यां योजनशतद्वयरूपस्य परिमाणस्याव्याहतत्वादित्येवमेकत्र क्षेत्रं वर्धयतो व्रतसापेक्षत्वादतिचारः। तथा कथंचिदतिव्याकुलत्वप्रमादि-

त्वमत्यपाटवादिना स्मृतेः स्मरणस्य योजनशतादिरूपदिक्परिमाणविषयस्यान्तर्धानं भ्रंशः स्मृत्यन्तर्धानमिति । इह वृद्धसंप्रदायः । ऊर्ध्वं यत्प्रमाणं गृहीतं तस्योपरि पर्वतशिखरे वृक्षे वा मर्कटः पक्षी वा वस्त्रमाभरणं वा गृहीत्वा व्रजेत् । तत्र तस्य न कल्पते गन्तुम् । यदा तु[1] तत्पतितमन्येन वानीतं तदा कल्पते ग्रहीतुम् । एतत्पुनरष्टापदोर्ज्जयन्तादिषु भवेत् । एवमधःकूपादिषु विभाषा । तथा यत्तिर्यक्प्रमाणं गृहीतं तत्त्रिविधेन कारणेन नातिक्रमितव्यं क्षेत्रवृद्धिश्च न कर्तव्या । कथम् । असौ पूर्वेण भाण्डं गृहीत्वा गतो यावत्परिमाणं ततः परतो भाण्डमर्घं लभत इति कृत्वापरेण यानि योजनानि तानि पूर्वदिक्परिमाणे क्षिपति । यदि च स्मृत्यन्तर्धानात्परिमाणमतिक्रान्तो भवेत्, तदा ज्ञाते निवर्तितव्यं परतश्च न गन्तव्यम् । अन्योऽपि न विसर्जनीयो ऽथवानाज्ञया कोऽपि गतो भवेत्, तदा यत्तेन लब्धं स्वयं विस्मृत्य गतेन वा तन्न गृह्यत इति ॥

अथ द्वितीयस्य गुणव्रतस्य[2] ।

**सचित्तसंबद्धसंमिश्राभिषवदुःपक्वाहाराः ॥ ३२ ॥**

इति ॥ सचित्तं च संबद्धं च संमिश्रं चाभिषवश्च दुःपक्वाहारश्चेति समासः । इह च सचित्ताद्यौ निवृत्ति-

१ B omits.   २ B D omit.

विषयीकृतेऽपि प्रवृत्तावतिचाराभिधानं व्रतसापेक्षस्यानाभोगातिक्रमातिनिबन्धनप्रवृत्त्या द्रष्टव्यम्। अन्यथा भङ्ग एव स्यात्। तत्र सचित्तं कन्दमूलफलादि। तथा संबद्धं प्रतिबद्धं सचित्तवृक्षेषु गुन्दादि पक्वफलादि वा। तद्भक्षणे हि सावद्याहारवर्जकस्य सावद्याहारप्रवृत्तिरूपत्वादनाभोगादिनातिचारः। अथवा "अस्थिकं त्यक्ष्यामि तस्यैव सचेतनत्वात् कटाहं भक्षयिष्यामि तस्याचेतनत्वात्" इति। तथा संमिश्रमर्धपरिणतफलादि सद्यःपिष्टकणिक्कादि वा। अभिषवः सुरासन्धानादि। दुःपक्वाहारस्त्वार्धस्विन्नपृथुकादि। एतेऽप्यतिचारा अनाभोगादतिक्रमादिना वा संमिश्राद्युपजीवनप्रवृत्तस्य भवन्ति। अन्यथा पुनर्भङ्ग एवेति। इह भोगोपभोगमानलक्षणं गुणव्रतमन्यत्र भोजनतो गुणव्रतं यदुच्यते तदपेक्षयैवातिचारा उपन्यस्ताः शेषव्रतपञ्चपञ्चातिचारसाधर्म्यात्। अन्यथान्यत्रावश्यकनिर्युक्त्यादौ कर्मतोऽपीदम् अभिधीयते। तच्च कर्म जीविकार्थमारम्भः तदाश्रित्य खरकर्मादीनां निस्तृंशजनोचितकठोरारम्भाणां कोट्टपालगुप्तिपालत्वादीनां वर्जनपरिमाणं कार्यमिति॥

अत्र चाङ्गारकर्मादयः पञ्चदशातिचारा भवन्ति। तदुक्तम्।

इङ्गाली १-वण २-साडी ३-भाडी ४-फोडीसु ५-वज्जए कम्मं।
वाणिज्जं चेव य दन्त ६-लक्ख ७-रस ८-केस ९-विस १०-
विसयं॥ १॥

एवं खु जन्तपीलणकम्मं ११ निल्लञ्छणं च १२ दवदाणं १३।
सरदहतलायसोसं १४ असईपोसं च १५ वज्जिज्जा॥ ९॥

भावार्थस्तु वृद्धसंप्रदायादवसेयः। स चायम्। अङ्गारकर्मेति। अङ्गारान् कृत्वा विक्रीणीते तत्र षण्णां जीवनिकायानां वधः स्यात्। ततस्तन्न कल्पते। १॥ वनकर्म यद्वनं क्रीणाति ततस्तच्छित्त्वा विक्रीय मूल्येन जीवति। एवं पत्रादीन्यपि प्रतिषिद्धानि भवन्ति। २॥ शकटीकर्म यच्छाटिकत्वेन जीवति तत्र गवादीनां वधबन्धादयो दोषाः स्युः। ३॥ भाटीकर्म यद्भाटकमादाय स्वकीयेन शकटादिना परभाण्डं वहत्यन्येषां वा शकटबलीवर्दादीनर्पयतीति। ४॥ स्फोटीकर्म उण्डत्वं यद्वा हलेन भूमेः स्फोटनम्। ५॥ दन्तवाणिज्यं यत्पूर्वमेव पुलिन्द्राणां मूल्यं ददाति "दन्तान्मे यूयं दद्यत" इति। ततस्ते हस्तिनो घ्नन्ति "अचिरादसौ वाणिजक एष्यति" इति कृत्वा। एवं कर्मकराणां शङ्खमूल्यं ददाति पूर्वानीतांस्तु क्रीणाति। ६॥ लाक्षावाणिज्यमप्येवमेव। दोषस्तु तत्र कृमयो भवन्ति। ७॥ रसवाणिज्यं कल्पपालत्वं। तत्र सुरादावनेके दोषाः मारणाक्रोशवधादयः। ८॥ केशवाणिज्यं यद्दास्यादीन् गृहीत्वा अन्यत्र विक्रीणीते। अत्राप्यनेके दोषाः परवशित्वादयः। ९॥ विषवाणिज्यं विषविक्रयः। स च न कल्पते, यतस्तेन बहूनां जीवानां विराधना स्यात्। १०॥ यन्त्रपीडनकर्म तिलेक्षुयन्त्रादिना तिलादिपीडनम्। ११॥ निर्लाञ्छनकर्म गवादीनां वर्धितककरणम्। १२॥ दवदानकर्म यद्वने दवं

ददाति क्षेत्ररक्षणनिमित्तं यथोत्तरापथे । दग्धे हि तत्र तरुणं तृणमुत्तिष्ठते तत्र च सत्त्वशतसहस्राणां वधः स्यात् ।१३॥ सरोह्रदतडागपरिशोषणं यत्सरःप्रभृतीनि शोषयति[1] । १४ ॥ असतीपोषणं यद्योनिपोषका दासीः पोषयन्ति तत्संबन्धिनीं च भाटीं गृह्णन्ति यथा[2] गोल्लविषय इति । १५ ॥

दिग्मात्रदर्शनं[3] चैतद्बहुसावद्यानां च कर्मणामेवंजातीयानां न पुनः परिगणनमिति । इह चैव विंशतिसंख्यातिचाराभिधानम् । अन्यत्रापि पञ्चातिचारसंख्यया तज्जातीयानां[4] व्रतपरिणामकालुष्यनिबन्धनविधानामपरेषां संग्रहो द्रष्टव्य इति ज्ञापनार्थम् । तेन स्मृत्यन्तर्धानादयो यथासंभवं सर्वव्रतेष्वतिचारा दृश्या इति । नन्वङ्गारकर्मादयः कस्मिन्व्रतेऽतिचाराः । खरकर्मव्रत इति चेत् तर्हि व्रतविषयस्यातिचाराणां च कः परस्परं विशेषः खरकर्मरूपत्वादङ्गारकर्मादीनाम् । अत्रोच्यते । खरकर्मादय एवैते, अतः खरकर्मादिव्रतिना परिहार्याः । यदा पुनरेतेष्वेवानाभोगादिना प्रवर्तन्ते तदा खरकर्मव्रतातिचारा भवन्ति । यदा त्वाकुट्या तदा भङ्गा एवेति ॥

---

१ D P add तत्र धान्यमुप्यते ।

२ D omits from here down to विंशति॰ of the compound विंशतिसंख्याति॰ ।

३ C दिग्मात्रप्रदर्शने ।

४ B C तज्जातीयानां ।

अथ तृतीयस्य

## कन्दर्पकौकुच्यमौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि ॥ ३३ ॥

इति ॥ कन्दर्पश्च कौकुच्यं च मौखर्यं चासमीक्ष्याधिकरणं चोपभोगाधिकत्वं चेति समासः । तत्र कन्दर्पः कामः । तद्धेतुर्विशिष्टो वाक्प्रयोगोऽपि कन्दर्प एव मोहोद्दीपकं वा कर्मेति भावः । इह च सामाचारी । श्रावकस्याट्टहासो न कल्पते कर्तुम् । यदि नाम हसितव्यं तदेषदेवेति । तथा कुकुचः कुत्सितसंकोचनादिक्रियायुक्तः । तद्भावः कौकुच्यम् । अनेकप्रकाराभिमुखनयनादिविकारपूर्विका परिहासादिजनिता भाण्डानामिव विडम्बनक्रियेत्यर्थः । अत्र च सामाचारी । तादृशानि भणितुं न कल्पन्ते यादृशैर्लोकस्य हास्यमुत्पद्यते । एवं गत्या गन्तुं स्थानेन वा स्थातुमिति । एतौ च कन्दर्पकौकुच्याख्यावतिचारौ प्रमादाचरितव्रतस्यावसेयौ[1] प्रमादरूपत्वात्तयोः । तथा मुखमस्यास्तीति मुखरः । तद्भावः कर्म वेति मौखर्यं धार्ष्ट्यप्रायमसभ्यासत्यासंबद्धप्रलापित्वम् । अयं च पापोपदेशव्रतस्यातिचारो मौखर्ये सति पापोपदेशसंभवात् । तथासमीक्ष्यैव[2] तथाविधकार्यमपर्यालोच्यैव प्रवणतया यद्व-

---

१ B omits from व्रतस्यावसेयौ down to अयं च पापोपदेश० ।

२ P omits तथा ।

स्थापितमधिकरणं वास्युदूखलशिलापुत्रकगोधूमयन्त्रकादि तदसमीक्ष्याधिकरणम्। अत्र सामाचारी। श्रावकेण न संयुक्तानि शकटादीनि धारयितव्यानीति। अयं च हिंस्रप्रदानव्रतस्यातिचारः। तथोपभोगस्योपलक्षणत्वाद्भोगस्य चोक्तनिर्वचनस्याधिकत्वमतिरिक्ततोपभोगाधिकत्वम्। इहापि सामाचारी। उपभोगातिरिक्तानि यदि बहूनि तैलामलकानि गृह्णन्ति तदा तल्लौल्येन बहवः स्नातुं तडागादौ व्रजन्ति ततश्च पूतरकादिवधोऽधिकः स्यात्। एवं ताम्बूलादिष्वपि विभाषा। न चैवं कल्पते। ततः को विधिरुपभोगे। तत्र स्नाने तावद्गृह एव स्नातव्यम्। नास्ति चेत्तत्र सामग्री तदा तैलामलकैः शिरो घर्षयित्वा तानि च सर्वाणि शाटयित्वा तडागादीनां तटे निविष्टोऽञ्जलिभिः स्नाति। तथा येषु पुष्पादिषु कुन्थ्वादयः सन्ति तानि परिहरतीति। अयं च प्रमादाचरितव्रत एव विषयात्मकत्वादस्य। अपध्यानाचरितव्रते त्वनाभोगादिना अपध्याने प्रवृत्तिरतिचार इति स्वयमभ्यूह्यम्। कन्दर्पादय आकुट्या क्रियमाणा भङ्गा एवावसेया इति॥

अथ प्रथमशिक्षापदस्य।

## योगदुष्प्रणिधानानादरस्मृत्यनुपस्थापनानि ॥ ३४ ॥

इति॥ योगदुःप्रणिधानानि चानादरश्च स्मृत्यनुपस्थापनं चेति समासः। तत्र योगा मनोवचनकायाः तेषां दुष्प्रणिधानानि सावद्ये प्रवर्तनलक्षणानि योगदुष्प्रणिधानानि। एते

चयोऽतिचाराः । अनादरः पुनः प्रबलप्रमादादिदोषाद् यथाकथंचित्करणं कृत्वा वाकृतसामायिककार्यस्यैव तत्क्षणमेव पारणमिति । स्मृत्यनुपस्थापनं पुनः स्मृतेः सामायिककरणावसरविषयायाः कृतस्य वा[1] सामायिकस्य प्रबलप्रमाददोषादनुपस्थापनमनवतारणम् । एतदुक्तं भवति । "कदा मया सामायिकं कर्तव्यं कृतं मया सामायिकं न वा" इत्येवंरूपस्य स्मरणस्य भ्रंश इति । ननु मनोदुष्प्रणिधानादिषु सामायिकस्य निरर्थकत्वादभाव एव प्रतिपादितो भवति । अतिचारस्तु मालिन्यरूपो भवतीति कथं सामायिकाभावे । अतो भङ्गा एवैते नातिचाराः । सत्यम् । किं त्वनाभोगतोऽतिचारत्वमिति । ननु द्विविधं त्रिविधेन सावद्यप्रत्याख्यानं सामायिकम् । तच्च मनोदुष्प्रणिधानादौ प्रत्याख्यानभङ्गात्सामायिकाभाव एव । तद्भङ्गजनितं[2] प्रायश्चित्तं च स्यात्, मनोदुष्प्रणिधानं च दुष्परिहार्यं, मनसोऽनवस्थितत्वात् । अतः सामायिकप्रतिपत्तेः सकाशात्तदप्रतिपत्तिरेव[3] श्रेयसीति । नैवं । यतः सामायिकं द्विविधं त्रिविधेन प्रतिपन्नम् । तत्र "मनसा सावद्यं न करोमि" इत्यादीनि षट्प्रत्याख्यानानीत्यन्यतरभङ्गेऽपि शेषसद्भावाच्च सामायिकस्यात्यन्ताभावो न[4] मिथ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रशुद्धेश्च सर्वविरतिसामायिकेऽपि तथाभ्युपगतत्वात् यतो गुप्तिभङ्गे मिथ्यादुष्कृतं प्रायश्चित्तमुक्तम् । यदाह ।

---

१ B omits.
२ B एतद्भङ्गजनितं ।
३ C omits.
४ P omits.

बीओ उ असमिउमित्ति कीस सहसा अगुत्तो वा।

द्वितीयोऽतिचारः समित्यादिभङ्गरूपोऽनुतापेन शुद्ध्यतीत्यर्थः। इति न प्रतिपत्तेरप्रतिपत्तिर्गरीयसीति। किं च सातिचारानुष्ठानादप्यभ्यासतः कालेन निरतिचारमनुष्ठानं भवतीति। सूरयो यदाहुः।

अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः।

अथ द्वितीयस्य।

**आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः ॥ ३५ ॥**

इति ॥ आनयनं च प्रेष्यश्चानयनप्रेष्यौ। तयोः प्रयोगावानयनप्रेष्यप्रयोगौ। तथा शब्दरूपयोरनुपातौ शब्दरूपानुपातौ। आनयनप्रेष्यप्रयोगौ च शब्दरूपानुपातौ च पुद्गलक्षेपश्चेति समासः। तत्रानयने विवक्षितक्षेत्राद्बहिर्वर्तमानस्य सचेतनादिद्रव्यस्य विवक्षितक्षेत्रप्रापणे प्रयोगः। स्वयं गमने व्रतभङ्गभयादन्यस्य स्वयमेवागच्छतः संदेशादिना व्यापारणमानयनप्रयोगः। तथा प्रेष्यस्यादेश्यस्य प्रयोगो विवक्षितक्षेत्राद्बहिः प्रयोजनाय स्वयं गमने व्रतभङ्गभयादन्यस्य व्यापारणं प्रेष्यप्रयोगः। तथा शब्दस्य काशितादिरूपस्य। रूपस्य स्वशरीराकारस्य विवक्षितक्षेत्राद्बहिर्व्यवस्थितस्याह्वानीयस्याह्वानाय श्रोत्रे दृष्टौ वानुपातोऽवतारणमिति योऽर्थः। अयमत्र भावः। विवक्षितक्षेत्राद्बहिर्वर्त-

मानं कंचन नरं व्रतभङ्गभयादाक्रातुमशक्नुवन् यदा काशितादिशब्दश्रावणस्वकीयरूपसंदर्शनद्वारेण तमाकारयति, तदा व्रतसापेक्षत्वाच्छब्दानुपातरूपानुपातावतिचाराविति'। तथा पुद्गलस्य शर्करादेर्नियमितक्षेत्राद्बहिर्वर्तिनो जनस्य बोधनाय तदभिमुखं प्रक्षेपः पुद्गलप्रक्षेपः। देशावकाशिकव्रतं हि गृह्यते मा भूद्गमनागमनादिव्यापारजनितः प्राण्युपमर्द इत्यभिप्रायेण। स च स्वयंकृतोऽन्येन वा कारित इति न कश्चित्फले विशेषः। प्रत्युत गुणः स्वयं गमन ईर्यापथविशुद्धेः। परस्य पुनरनिपुणत्वात्तदशुद्धिरिति। इह चाद्यद्वयमव्युत्पन्नबुद्धित्वेन सहसाकारादिना वा। अन्यद्वयं तु व्याजपरस्यातिचारतां यातीति। इहाहुः वृद्धाः। दिग्व्रतसंक्षेपकरणमणुव्रतादिसंक्षेपकरणस्याप्युपलक्षणं द्रष्टव्यं तेषामपि संक्षेपस्यावश्यं कर्तव्यत्वात्। प्रतिव्रतं च संक्षेपकरणस्य भिन्नव्रतत्वेन द्वादशव्रतानीति संख्याविरोधः स्यादिति। अत्र केचिदाहुः। दिग्व्रतसंक्षेप एव देशावकाशिकं तदतिचाराणां दिग्व्रतानुसारितयैवोपलम्भात्। अत्रोच्यते। यथोपलक्षणतया शेषव्रतसंक्षेपकरणमपि देशावकाशिकमुच्यते तथोपलक्षणतयैव तदतिचारा अपि तदनुसारिणो द्रष्टव्याः। अथवा प्राणातिपातादिसंक्षेपकरणेषु बन्धादय एवातिचारा घटन्ते। दिग्व्रतसंक्षेपे तु संक्षिप्तत्वात् क्षेत्रस्य शब्दानुपातादयोऽपि स्युरिति भेदेन दर्शिताः। न च सर्वेषु व्रतभेदेषु विशेषतोऽतिचारा दर्शनीया रात्रिभोजनादिव्रतभेदेषु तेषामदर्शितत्वादिति॥

अथ तृतीयस्य ।

**अप्रत्युपेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्तारोपक्रमणानादरस्मृत्यनुपस्थापनानि ॥ ३६ ॥**

इति ॥ इह पदेऽपि पदसमुदायोपचारादप्रत्युपेक्षितपदेनाप्रत्युपेक्षितदुःप्रत्युपेक्षितः स्थण्डिलादिभूमिदेशः परिगृह्यते । अप्रमार्जितपदेन तु स एवाप्रमार्जितदुःप्रमार्जित इति । तथोत्सर्गश्चादाननिक्षेपौ चेत्युत्सर्गादाननिक्षेपाः । ततोऽप्रत्युपेक्षिताप्रमार्जिते स्थण्डिलादावुत्सर्गादाननिक्षेपा अप्रत्युपेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपाः । ततस्ते च संस्तारोपक्रमणं चानादरश्च स्मृत्यनुपस्थापनं चेति समासः । तत्राप्रत्युपेक्षिते प्रथमत एव लोचनाभ्यामनिरीक्षिते दुःप्रत्युपेक्षिते तु प्रमादाद्भ्रान्तलोचनव्यापारेण वा न सम्यग्निरीक्षिते तथाप्रमार्जिते मूलत एव वस्त्राञ्चलादिना अपरामृष्टे दुःप्रमार्जिते त्वर्धप्रमार्जिते स्थण्डिलादौ यथार्हमुत्सर्गो मूत्रपुरीषादीनामुज्झनीयानामादाननिक्षेपौ च पौषधोपवासोपयोगिनो धर्मोपकरणस्य पीठफलकादेर्द्वावतिचारौ स्यातामेताविति । १-२ । इह संस्तारोपक्रमणमिति संस्तारकशब्दः शय्योपलक्षणम् । तत्र शय्या शयनं सर्वाङ्गीणं वसतिर्वा संस्तारकोऽर्धतृतीयहस्तपरिमाणः । ततः संस्तारकस्य[1] प्रस्तावादप्रत्युपेक्षितस्याप्रमार्जितस्य चोपक्रम उपभोगोऽतिचारोऽयं तृतीयः । ३ । [2]अनादरस्मृत्यनुप-

---

१ C संसारकस्य ।   २ B अनादरः सू० ।

स्थापने पुनर्द्वौ चतुर्थपञ्चमावतिचारौ सामायिकातिचाराविव[1] भावनीयाविति । ४-५ । इह संस्तारोपक्रम इयं वृद्धसामाचारी । कृतपौषधोपवासो नाप्रत्युपेक्षितां शय्यामारोहति संस्तारकं वा पौषधशालां वा सेवते दर्भवस्त्रं वा शुद्धवस्त्रं वा भूम्यां संस्तृणाति कायिकाभूमेश्चागतः पुनरपि संस्तारकं प्रत्युपेक्षते । अन्यथातिचारः स्यात् । एवं पीठादिष्वपि विभाषेति ।

अथ चतुर्थस्य ।

**सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥ ३७ ॥**

इति ॥ सचित्तनिक्षेपपिधाने च परव्यपदेशश्च मात्सर्यं च कालातिक्रमश्चेति समासः । तत्र सचित्ते सचेतने पृथिव्यादौ निक्षेपः साधुदेयभक्तादेः स्थापनं सचित्तनिक्षेपः । तथा सचित्तेनैव बीजपूरादिना पिधानं साधुदेयभक्तादेरेव स्थगनं सचित्तपिधानम् । तथा परस्यात्मव्यतिरिक्तस्य व्यपदेशः[2] परव्यपदेशः "परकीयमिदमन्नादिकं" इत्येवमदित्सावतः साधुसमक्षं भणनं परव्यपदेशः । तथा मत्सरोऽसहनं साधुभिर्याचितस्य[3] कोपकरणं "तेन रङ्केण याचितेन दत्तमहं तु किं ततोऽपि हीनः" इत्यादिविकल्पो वा । सो ऽस्यास्तीति[4]

---

१ C विव ।
२ C omits व्यपदेशः ।
३ C omits साधुभिर्याचितस्य ।
४ C omits अस्य ।

मत्सरौ[१] । तद्भावो[१] मात्सर्यम् । तथा कालस्य साधूचितभिक्षासमयस्यातिक्रमो ऽदित्सयानागतभोजनपश्चाद्भोजनद्वारेणोल्लङ्घः कालातिक्रमो ऽतिचार इति । भावना पुनरेवम् । यदानाभोगादिनातिक्रमादिना वैतानाचरतितदातिचारः । अन्यदा तु भङ्ग इति ॥

एवमणुव्रतगुणव्रतशिक्षापदानि तदतिचारांश्चाभिधाय प्रस्तुते योजयन्नाह ।

**एतद्रहिताणुव्रतादिपालनं विशेषतो गृहस्थधर्मः ॥ ३८ ॥**

इति ॥ एतैरतिचारै रहितानामणुव्रतादीनामुपलक्षणत्वात् सम्यक्त्वस्य च पालनम् । किमित्याह विशेषतो गृहस्थधर्मो भवति यः शास्त्रादौ प्राक्सूचित आसीदिति ॥

आहोक्तविधिना प्रतिपन्नेषु सम्यक्त्वाणुव्रतादिष्वतिचाराणामसंभव एव[२] । तत्कथमुक्तं "एतद्रहिताणुव्रतादिपालनं" इत्याशङ्क्याह ।

**क्लिष्टकर्मोदयादतिचाराः ॥ ३९ ॥**

इति ॥ क्लिष्टस्य सम्यक्त्वादिप्रतिपत्तिकालोत्पन्नशुद्धिगुणादपि सर्वथाव्यवच्छिन्नानुबन्धस्य कर्मणो मिथ्यात्वादेरुदयाद् विपाकात्सकाशादतिचाराः शङ्कादयो वधबन्धादयश्च संपद्यन्ते ।

---

१ B C omit. २ B omits.

इदमुक्तं भवति । यदा ¹तथाभव्यत्वपरिशुद्धिवशादत्यन्तमननुबन्धीभूतेषु मिथ्यात्वादिषु सम्यक्त्वादि प्रतिपद्यते तदातिचाराणामसंभव एव । अन्यथाप्रतिपत्तौ तु स्युरप्यतिचारा इति ॥

तर्हि कथमेषां निवारणमित्याशङ्क्याह ।

**विहितानुष्ठानवीर्यतस्तज्जयः ॥ ४० ॥**

इति ॥ विहितानुष्ठानं प्रतिपन्नसम्यक्त्वादेर्नित्यानुस्मरणादिलक्षणम् । तदेव वीर्यं जीवसामर्थ्यं तस्मात् । किमित्याह । तज्जयः तेषामतिचाराणां जयो ऽभिभवः संपद्यते । यतो विहितानुष्ठानं सर्वापराधव्याधिविरेचनौषधं महदिति ॥

एतद्विषयमेवोपदेशमाह ।

**अत एव तस्मिन् यत्नः ॥ ४१ ॥**

इति ॥ अत एव विहितानुष्ठानवीर्यस्यातिचारजयहेतुत्वादेव तस्मिन् विहितानुष्ठाने यत्नः सर्वोपाधिशुद्ध उद्यमः कार्य इति । अन्यत्राप्युक्तम् ।

तम्हा निच्चसईए बहुमाणेणं च अहिगयगुणंमि ।
पडिवक्खदुगुंछाए परिणइआलोयणेणं च ॥ १ ॥
तित्थंकरभत्तीए सुसाहुजणपज्जुवासणाए य ।
उत्तरगुणसद्धाए य एत्थ सया होइ जइयव्वं ॥ २ ॥

---

१ B यथा ।

एवमसन्तोवि इमो जायइ जाओ य ण पडइ कयावि।
ता एत्थं बुद्धिमया अपमाओ होइ कायव्वो त्ति ॥ ३ ॥

सांप्रतं सम्यक्त्वादिगुणेष्वलब्धलाभाय लब्धपरिपालनाय च विशेषतः शिक्षामाह।

**सामान्यचर्यास्य ॥ ४१ ॥**

इति ॥ सामान्या प्रतिपन्नसम्यक्त्वादिगुणानां सर्वेषां प्राणिनां साधारणा चासौ चर्या च चेष्टा सामान्यचर्या अस्य प्रतिपन्नविशेषगृहस्थधर्मस्य जन्तोरिति ॥

कीदृशीत्याह।

**समानधार्मिकमध्ये वासः ॥ ४२ ॥**

इति ॥ समानास्तुल्यसमाचारतया सदृशा उपलक्षणत्वादधिकाश्च ते धार्मिकाश्चेति समासः। तेषां मध्ये वासोऽवस्थानम्। तत्र चायं गुणः। यदि कश्चित्तथाविधदर्शनमोहोदयाद्धर्माच्च्यवते ततस्तं स्थिरीकरोति स्वयं वा प्रच्यवमानस्तैः स्थिरीक्रियते। पठ्यते च[१]।

यद्यपि निर्गतभावस्तथाप्यसौ रक्ष्यते सद्भिरन्यैः।
वेणुर्विलूनमूलोऽपि वंशगहने महीं नैति ॥ १ ॥

तथा।

**वात्सल्यमेतेषु ॥ ४३ ॥**

---

१ B omits.

इति ॥ वात्सल्यमन्नपानताम्बूलादिप्रदानग्लानावस्थाप्रतिजागरणादिना सत्करणमेतेषु साधर्मिकेषु कार्यं तस्य प्रवचनसारत्वात्। उच्यते च।

जिनशासनस्य सारो जीवदया निग्रहः कषायाणाम्।
साधर्मिकवात्सल्यं भक्तिश्च तथा जिनेन्द्राणाम् ॥ १ ॥

तथा।

## धर्मचिन्तया स्वपनम्[1] ॥ ४५ ॥

इति ॥ धर्मचिन्तया

धन्यास्ते वन्दनीयास्ते [2]तैस्त्रैलोक्यं पवित्रितम्।
यैरेष भुवनक्लेशी काममल्लो विनिर्जितः ॥ १ ॥

इत्यादिशुभभावनारूपया[3]। स्वपनं निद्राङ्गीकारः। शुभभावनासुप्तो हि तावन्तं कालमवस्थितशुभपरिणाम एव लभ्यत इति ॥

तथा।

## नमस्कारेणावबोधः ॥ ४६ ॥

इति ॥ नमस्कारेण सकलकल्याणपुरपरमश्रेष्ठिभिः परमेष्ठिभिरधिष्ठितेन "नमो अरिहन्ताणं"[4] इत्यादिप्रतीतरूपेणावबोधो निद्रापरिहारः परमेष्ठिनमस्कारस्य महागुणत्वात्। पठ्यते च।

---

१ C omits the Sûtra. २ C omits तैस्।
३ B रूपतया। ४ C अर०।

एष पञ्चनमस्कारः सर्वपापप्रणाशनः ।
मङ्गलानां च सर्वेषां प्रथमं भवति मङ्गलम् ॥ १ ॥

तथा ।

## प्रयत्नकृतावश्यकस्य विधिना चैत्यादिवन्दनम् ॥ ४७ ॥

इति ॥ प्रयत्नेन प्रयत्नवता कृतान्यावश्यकानि[1] मूत्रपुरीषोत्सर्गाङ्गप्रक्षालनशुद्धवस्त्रग्रहणादीनि येन स तथा तस्य । विधिना पुष्पादिपूजासंपादनमुद्रान्यसनादिना प्रसिद्धेन । चैत्यवन्दनं प्रसिद्धरूपमेव । आदिशब्दान्मातापित्रादिगुरुवन्दनस्य । यथोक्तम् ।

चैत्यवन्दनतः सम्यक्शुभो भावः प्रजायते ।
तस्मात्कर्मक्षयः सर्वस्ततः[2] कल्याणमश्नुते ॥ १ ॥ इत्यादि ।

तथा ।

## सम्यक्प्रत्याख्यानक्रिया ॥ ४८ ॥

इति ॥ सम्यगिति क्रियाविशेषणम् । ततः सम्यग् यथा भवति तथा मानक्रोधानाभोगादिदोषपरिहारवशात्प्रत्याख्यानस्य मूलगुणगोचरस्योत्तरगुणगोचरस्य च क्रिया ग्रहणरूपा । परिमितसावद्यासेवनेऽप्यपरिमितपरिहारेण प्रत्याख्यानस्य महागुणत्वात् । यथोक्तम् ।

---

१ B C ॰वश्यकादीनि । २ B C सर्वतः ।

परिमितमुपभुञ्जानो ह्यपरिमितमनन्तकं परिहरंश्च ।
प्राप्नोति परलोके ह्यपरिमितमनन्तकं सौख्यम् ॥ १ ॥ इति ।

तथा ।

## यथोचितं चैत्यगृहगमनम् ॥ ४९ ॥

इति ॥ यथोचितं यथायोग्यं चैत्यगृहगमनं चैत्यगृहे जिनभवनलक्षणेऽर्हद्बिम्बवन्दनाय प्रत्याख्यानक्रियानन्तरमेव गमनमिति । इह द्विविधः श्रावको भवति, ऋद्धिमांस्तदितरश्च । तत्रर्द्धिमान् राजादिरूपः, स सर्वस्वपरिवारसमुदायेन व्रजति । एवं हि तेन प्रवचनप्रभावना कृता भवति । तदितरोऽपि स्वकुटुम्बसंयोगेनेति समुदायकृतानां कर्मणां भवान्तरे समुदायेनैवोपभोगात् ।

तथा ।

## विधिनानुप्रवेशः ॥ ५० ॥

इति ॥ विधिना विधानेन चैत्यगृहे प्रवेशः कार्यः । अनुप्रवेशविधिश्चायम् । "सचित्ताणं दव्वाणं विउस्सरणयाए अचित्ताणं दव्वाणं अविउस्सरणयाए एगसाडिएणं उत्तरासङ्गेणं चक्खुफासे अञ्जलिपग्गहेणं पणसो एगत्तीकरणेणं" ति ॥

तत्र च ।

## उचितोपचारकरणम् ॥ ५१ ॥

इति ॥ उचितस्यार्हद्बिम्बानां योग्यस्योपचारस्य पुष्पधूपाद्यर्चनलक्षणस्य करणं विधानम् ॥

आत्मनि नियोजनं तस्यापि तदनुष्ठानफलत्वात् यथोक्तम्—

भार्या यथान्यसक्तायास्तच्च भावे सदा स्थिते।
तद्योगः पापबन्धाय तथा धर्मेऽपि दृश्यताम्॥ १॥

तद्योगः इत्यन्यप्रसक्तनारीव्यापारः स्वकुटुम्बपरिपालनादिरूप इति॥

तथा।

## तत्कर्तृषु प्रशंसोपचारौ॥ ६०॥

इति॥ तत्कर्तृष्वात्मानमपेक्ष्याशक्यानुष्ठानविधायिषु पुरुषसिंहेषु। प्रशंसोपचारौ प्रशंसा मुहुर्मुहुर्गुणोत्कीर्तनरूपा उपचारस्तु तदुचितान्नपानवसनादिना साहाय्यकरणमिति॥

तथा।

## निपुणभावचिन्तनम्॥ ६१॥

इति॥ निपुणानामतिसूक्ष्मभावगम्यानां[1] भावानां पदार्थानामुत्पादव्ययध्रौव्यस्वभावानां बन्धमोक्षादीनां वानुप्रेक्षणम्। यथा।

अनादिनिधने द्रव्ये स्वपर्यायाः प्रतिक्षणम्।
उन्मज्जन्ति निमज्जन्ति जलकल्लोलवज्जले॥ १॥

तथा।

स्नेहाभ्यक्तशरीरस्य रेणुना श्लिष्यते यथा गात्रम्।
रागद्वेषाक्लिन्नस्य कर्मबन्धो भवत्येवम्॥ २॥ इत्यादीनि।

---

१ C निपुणानामिति निपुणामतिसूक्ष्म०; D P निपुणानामति-निपुणामतिसूक्ष्म०।

तथा ।

## गुरुसमीपे प्रश्नः ॥ ६२ ॥

इति ॥ यदा पुनर्निपुणं चिन्त्यमानोऽपि कश्चिद्भावोऽतिगम्भीरतया स्वयमेव निश्चेतुं न पार्यते तदा गुरोः संविग्नस्य गीतार्थस्य च समीपे प्रश्नो विशुद्धविधिपूर्वकं पर्यनुयोगः कार्यः । यथा भगवन्नावबुद्धोऽयमर्थोऽस्माभिः कृतयत्नैरपि ततोऽस्मान्बोधयितुमर्हन्ति भगवन्त इति ॥

तथा ।

## निर्णयावधारणम् ॥ ६३ ॥

इति ॥ निर्णयस्य निश्चयकारिणो वचनस्य गुरुणा निरूपितस्यावधारणं दत्तावधानतया ग्रहणम् । भणितं चान्यत्रापि ।

सम्मं वियारियव्वं अट्ठपयं भावणापहाणेण ।
विसए य ठावियव्वं बहुसुयगुरुणो सयासाओ ॥ १ ॥

तथा ।

## ग्लानादिकार्याभियोगः ॥ ६४ ॥

इति ॥ ग्लानादीनां ग्लानबालवृद्धागमग्रहणोद्यतप्राघूर्णकादिलक्षणानां साधुसाधर्मिकाणां यानि कर्माणि प्रतिजागरणौषधान्नपानवस्त्रप्रदानपुस्तकादिसमर्पणोपाश्रयनिरूपणादिलक्षणानि तेष्वभियोगो दत्तावधानता विधेयेति ॥

तथा ।

**कृताकृतप्रत्युपेक्षा ॥ ६५ ॥**

इति ॥ कृतानामकृतानां च चैत्यकार्याणां स्नानादिकार्याणां च प्रत्युपेक्षा निपुणाभोगविलोचनव्यापारेण गवेषणम् । तत्र कृतेषु करणाभावादकृतकरणायोद्यमो विधेयः । अन्यथा निष्फलक्रियाप्रसङ्गादिति ॥

ततश्च ।

**उचितवेलयागमनम् ॥ ६६ ॥**

इति ॥ उचितवेलया द्रव्यव्यवहारराजसेवादिप्रस्तावलक्षणया आगमनं चैत्यभवनाद्गुरुसमीपाद्वा गृहादाविति ॥

ततः ।

**धर्मप्रधानो व्यवहारः ॥ ६७ ॥**

इति ॥ "कुलक्रमागतं" इत्यादिसूत्रोक्तानुष्ठानरूपो व्यवहारः कार्यः ॥

तथा ।

**द्रव्ये संतोषपरता ॥ ६८ ॥**

इति ॥ द्रव्ये धनधान्यादौ विषये संतोषप्रधानता परिमितेनैव निर्वाहमात्रहेतुना द्रव्येण संतोषवता धार्मिकेणैव भवितव्यमित्यर्थः । असंतोषस्यासुखहेतुत्वात् । यदुच्यते ।

अत्युष्णात्सहितादन्नादच्छिद्रात्सितवाससः।
अपरप्रेष्यभावाच्च शेषमिच्छन्पतत्यधः ॥ १० ॥ इति।

तथा।

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम्।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ २ ॥ इति।

तथा।

## धर्मे धनबुद्धिः ॥ ६९ ॥

इति ॥ धर्मे श्रुतचारित्रात्मके सकलाभिलषिताविकलसिद्धिमूले धनबुद्धिर्मतिमतां धर्म एव धनमिति परिणामरूपा निरन्तरं निवेशनीयेति ॥

तथा।

## शासनोन्नतिकरणम् ॥ ७० ॥

इति ॥ शासनस्य निखिलहेयोपादेयभावाविर्भावनभास्करकल्पस्य जिननिरूपितवचनरूपस्य उन्नतिरुच्चैर्भावः तस्याः करणं सम्यग् न्यायव्यवहरणयथोचितजनविनयकरणदीनानाथाभ्युद्धरणसुविहितयतिपुरस्करणपरिशुद्धशीलपालनजिनभवनविधापनयात्रास्नात्रादिनानाविधोत्सवसंपादनादिभिरुपायैः। तस्यातिमहागुणत्वादिति। पठ्यते च।

कर्तव्या चोन्नतिः सत्यां शक्ताविह नियोगतः।
अवन्ध्यं कारणं ह्येषा तीर्थकृन्नामकर्मणः ॥ १ ॥ इति।

तथा ।

**विभवोचितं विधिना क्षेत्रदानम् ॥ ७१ ॥**

इति ॥ विभवोचितं स्वविभवानुसारेण विधिनानन्तरमेव निर्देक्ष्यमाणेन क्षेत्रेभ्यो निर्देक्ष्यमाणेभ्य एव दानमन्नपानौषधवस्त्रपात्राद्युचितवस्तुवितरणम् ॥

विधिं क्षेत्रं च स्वयमेव निर्दिशन्नाह ।

**सत्कारादिर्विधिर्निःसङ्गता च ॥ ७२ ॥**

इति ॥ सत्करणं सत्कारोऽभ्युत्थानासनप्रदानवन्दनरूपो विनयः, स आदिर्यस्य देशकालाराधनविशुद्धश्रद्धाविष्करणदानक्रमानुक्रमादेः कुशलानुष्ठानविशेषस्य स तथा । किमित्याह । विधिर्वर्तते । निःसङ्गता ऐहिकपारलौकिकफलाभिलाषविकलतया सकलक्लेशलेशाकलङ्कितमुक्तिमात्राभिसंधिता । चकारः समुच्चये ॥

**वीतरागधर्मसाधवः क्षेत्रम् ॥ ७३ ॥**

इति ॥ वीतरागस्य जिनस्य धर्म उक्तनिरुक्तस्तत्प्रधानाः साधवो वीतरागधर्मसाधवः । क्षेत्रं दानार्हं पात्रमिति । तस्य च विशेषलक्षणमिदम् ।

क्षान्तो दान्तो मुक्तो जितेन्द्रियः सत्यवागभयदाता ।
प्रोक्तस्त्रिदण्डविरतो विधिगृहीता भवति पात्रम् ॥ १ ॥

तथा।

**दुःखितेष्वनुकम्पा यथाशक्ति द्रव्यतो भावतश्च ॥ ७४ ॥**

इति ॥ दुःखितेषु भवान्तरोपात्तपापपाकोपहितातितीव्रक्लेशावेशेषु देहिष्वनुकम्पा कृपा कार्या। यथाशक्ति स्वसामर्थ्यानुरूपम्। द्रव्यतस्तथाविधग्रासादेः प्रकाशात्। भावतो भीषणभवभ्रमणवैराग्यसंपादनादिरूपात्। च समुच्चये। दुःखितानुकम्पा हि तदुपकारत्वेन धर्मैकहेतुः। यथोक्तम्।

अन्योपकारकरणं धर्माय महीयसे च भवतीति।
अधिगतपरमार्थानामविवादो वादिनामत्र ॥ १ इति।

तथा।

**लोकापवादभीरुता ॥ ७५ ॥**

इति ॥ लोकापवादात्सर्वजनापरागलक्षणाद्भीरुतात्यन्तभीतभावः। किमुक्तं भवति। निपुणमत्या विचिन्त्य तथा तथोचितवृत्तिप्रधानतया सततमेव प्रवर्तितव्यं यथा यथा सकलसमीहितसिद्धिविधायिजनप्रियत्वमुज्जृम्भते न पुनः कथंचिदपि जनापवादः तस्य मरणान्निर्विशिष्यमाणत्वात्। तथा चावाचि।

श्लाघनीयमेव मरणं भवति कुलीनस्य लोकमध्येऽस्मिन्।
मरणं तु कालपरिणतिरियं च जगतोऽपि सामान्या ॥ १ ॥

इति।

तथा ।

गुरुलाघवापेक्षणम् ॥ ७६ ॥

इति ॥ सर्वप्रयोजनेषु धर्मार्थकामरूपेषु तत्तत्कालादिबलालोचनेन प्रारब्धुमिष्टेषु प्रथमत एव मतिमता गुरोर्भूयसो गुणलाभपक्षस्य लघोश्च तदितररूपस्य दोषलाभपक्षस्य च भावो गुरुलाघवं तस्य निपुणतया अपेक्षणमालोचनं कार्यमिति ॥

ततः किमित्याह ।

बहुगुणे प्रवृत्तिः ॥ ७७ ॥

इति ॥ प्रायेण हि प्रयोजनानि गुणलाभमिश्राणि । ततो बहुगुणे प्रयोजने प्रवृत्तिर्व्यापारः । तथा चार्षम् ।

अप्पेण बहुमेसेज्जा एयं पण्डियलक्खणं ।
सव्वासु पडिसेवासु एयं अट्ठपयं विऊ ॥

तथा ।

चैत्यादिपूजापुरःसरं भोजनम् ॥ ७८ ॥

इति ॥ प्राप्ते भोजनकाले चैत्यानामर्हद्बिम्बलक्षणानामादिशब्दात्साधुसाधर्मिकाणां च पूजा पुष्पधूपादिभिरन्नपानप्रदानादिभिश्चोपचरणं सा पुरःसरा यत्र तच्चैत्यादिपूजापुरःसरं भोजनमन्नोपजीवनम् । अतो ऽन्यत्रापि पठ्यते ॥

जिनपूओऽचियदाणं परियणसंभालणा उचियकिच्चं ।
ठाणुववेसो य तहा पच्चक्खाणस्स संभरणं ॥ १ ॥

तथा ।

तदन्वेव प्रत्याख्यानक्रिया ॥ ७९ ॥

इति ॥ तदन्वेव भोजनानन्तरमेव प्रत्याख्यानक्रिया द्विविधाद्याहारसंवरणरूपा ॥

तथा ।

शरीरस्थितौ प्रयत्नः ॥ ८० ॥

इति ॥ शरीरस्थितावुचिताभ्यङ्गसंवाहनस्नानादिलक्षणायां यत्न आदरः। तथा च पठ्यते ।

धर्मार्थकाममोक्षाणां शरीरं कारणं यतः ।
ततो यत्नेन तद्रक्ष्यं यथोक्तैरनुवर्तनैः ॥ १ ॥ इति ।

तथा ।

तदुत्तरकार्यचिन्ता ॥ ८१ ॥

इति ॥ तस्याः शरीरस्थितेरुत्तराण्युत्तरकालभावीनि यानि कार्याणि व्यवहारकरणादीनि तेषां चिन्ता तन्निरूपा कार्येति ॥

तथा ।

कुशलभावनायां प्रबन्धः ॥ ८२ ॥

इति ॥ कुशलभावनायां

सर्वेऽपि सन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चित्पापमाचरेत् ॥ १ ॥

इत्यादिशुभचिन्तारूपायां प्रबन्धः प्रकर्षवृत्तिः ॥

तथा ।

**शिष्टचरितश्रवणम् ॥ ८३ ॥**

इति ॥ शिष्टचरितानां "शिष्टचरितप्रशंसा" इति प्रथमाध्यायसूचोक्तलक्षणानां श्रवणं निरन्तरमाकर्णनम् । तच्छ्रवणे हि तद्गताभिलाषभावान्न कदाचिल्लब्धगुणहानिः संपद्यत इति ॥

तथा ।

**सान्ध्यविधिपालना ॥ ८४ ॥**

इति ॥ सान्ध्यस्य सन्ध्याकालभवस्य विधेरनुष्ठानविशेषस्य दिनाष्टमभागभोजनाभ्यवहारसंकोचादिलक्षणस्य पालनानुसेवनमिति ॥

एनामेव[1] विशेषत आह ।

**यथोचितं तत्प्रतिपत्तिः ॥ ८५ ॥**

इति ॥ यथासामर्थ्यं तत्प्रतिपत्तिः सान्ध्यविधिप्रतिपत्तिरिति ॥

कीदृशीत्याह ।

**पूजापुरःसरं चैत्यादिवन्दनम् ॥ ८६ ॥**

इति ॥ तत्कालोचितपूजापूर्वकं चैत्यवन्दनं गृहचैत्यचैत्यभवनयोः, आदिशब्दाद्यतिवन्दनं मातापितृवन्दनं च ॥

---

१ B एवमेव ।

तथा ।

## साधुविश्रामणक्रिया ॥ ८७ ॥

इति ॥ साधूनां निर्वाणाराधनयोगसाधनप्रवृत्तानां पुरुषाणां स्वाध्यायध्यानाद्यनुष्ठाननिष्ठोपहितश्रमाणां तथाविधविश्रामकसाध्वभावे विश्रामणक्रिया विश्राम्यतां विश्रामं लभमानानां करणं विश्रामणा सा चासौ क्रिया चेति समासः ॥

तथा ।

## योगाभ्यासः ॥ ८८ ॥

इति ॥ योगस्य सालम्बननिरालम्बनभेदभिन्नस्याभ्यासः पुनः पुनरनुशीलनम् । उक्तं च ।

सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः ।
जिनरूपध्यानं खल्वाद्यस्तत्तत्त्वगस्त्वपरः ॥ १ ॥

तत्तत्त्वगः इति निवृत्तजिनस्वरूपप्रतिबद्ध इति ।

तथा ।

## नमस्कारादिचिन्तनम् ॥ ८९ ॥

इति ॥ नमस्कारस्यादिशब्दात्तदन्यस्वाध्यायस्य च चिन्तनं भावनम् ॥

तथा ।

## प्रशस्तभावक्रिया ॥ ९० ॥

इति ॥ तथा तथा क्रोधादिदोषविपाकपर्यालोचनेन प्रशस्तस्य प्रशंसनीयस्य भावस्यान्तःकरणस्वरूपस्य क्रियाः करणम् । अन्यथा महादोषभावात् ।' यदुच्यते ।

चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते ।
यस्य तन्मुषितं दोषैस्तस्य शिष्टा विपत्तयः ॥ १ ॥ इति ।

तथा ।

## भवस्थितिप्रेक्षणम् ॥ ९१ ॥

इति ॥ भवस्थितेः संसाररूपस्य प्रेक्षणमवलोकनम् । यथा ।

यौवनं नगनदीस्यदोपमं
शारदाम्बुदविलासि जीवितम् ।
स्वप्नलब्धधनविभ्रमं धनं
स्थावरं किमपि नास्ति तत्त्वतः ॥ १ ॥

विग्रहा गदभुजङ्गमालयाः
संगमा विगमदोषदूषिताः ।
संपदोऽपि विपदा कटाक्षिता
नास्ति किंचिदनुपद्रवं स्फुटम् ॥ १ ॥ इत्यादीति ।

तदनु ।

## तन्नैर्गुण्यभावना ॥ ९२ ॥

इति ॥ तस्या भवस्थितेर्नैर्गुण्यभावना निःसारत्वचिन्तनम् । यथा ।

इतः क्रोधो गृध्रः प्रकटयति पक्षं निजमितः
शृगाली तृष्णेयं विवृतवदना धावति पुरः ।
इतः क्रूरः कामो विचरति पिशाचश्चिरमहो
श्मशानं संसारः क इह पतितः स्थास्यति सुखम् ॥ १ ॥

एतास्तावदसंशयं कुशदलप्रान्तोदबिन्दूपमा
लक्ष्म्यो बन्धुसमागमोऽपि न चिरस्थायी खलप्रीतिवत् ।
यच्चान्यत्किल किंचिदस्ति निखिलं तच्छारदाम्भोधर-
च्छायावच्चलतां बिभर्ति यदतः स्वस्मै हितं चिन्त्यताम् ॥
२ ॥ इति ।

तथा ।

## अपवर्गालोचनम् ॥ ९३ ॥

इति ॥ अपवर्गस्य मुक्तेरालोचनं सर्वगुणमयत्नेनोपादेयतया परिभावनम् ।

यथा ।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संपूरिताः प्रणयिनो विभवैस्ततः किं
कल्पं भृतं तनुभृतां तनुभिस्ततः किम् ॥ १ ॥

तस्मादनन्तमजरं परमं प्रकाशं
तच्चित्त चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य-
योगादयः कृपणजन्तुमता भवन्ति ॥ २ ॥

तथा ।

## श्रामण्यानुरागः ॥ ९४ ॥

इति ॥ श्रामण्ये शुद्धसाधुभाव अनुरागो विधेयः । यथा ।

जैनं मुनिव्रतमशेषभवात्तकर्म-
संतानतानवकरं स्वयमभ्युपेतः।
कुर्यां तदुत्तरतरं च तपः कदाहं
भोगेषु निःस्पृहतया परिमुक्तसङ्गः ॥ १ ॥ इति।

यथा।

**यथोचितं गुणवृद्धिः ॥ ९५ ॥**

इति ॥ यथोचितं यो यदा वर्धयितुमुचितस्तस्य सम्यग्दर्शनादेर्गुणस्य दर्शनप्रतिमाव्रतप्रतिमाभ्यासद्वारेण वृद्धिः पुष्टीकरणं कार्या।

तथा।

**सत्त्वादिषु मैत्र्यादियोग इति ॥ ९६ ॥**

इति ॥ सत्त्वेषु सामान्यतः सर्वजन्तुष्वादिशब्दाद्दुःखितसुखदोषदूषितेषु मैत्र्यादीनामाशयविशेषाणां योगो व्यापारः कार्यः ॥ मैत्र्यादिलक्षणं चेदम्।

परहितचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा।
परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥

इतिः परिसमाप्तौ ॥

संप्रत्युपसंहरन्नाह।

**विशेषतो गृहस्थस्य धर्म उक्तो जिनोत्तमैः।**
**एवं सद्भावनासारः परं[1] चारित्रकारणम् ॥ ९७ ॥**

---

१ B omits from परं down to तद्भावनासारः in the Commentary.

इति ॥ विशेषतः सामान्यगृहस्थधर्मवैलक्षण्येन गृहस्थस्य गृहमेधिनो धर्म उक्तो निरूपितो जिनोत्तमैरर्हद्भिः । एवमुक्तनीत्या । सद्भावनासारः परमपुरुषार्थानुकूलभावनाप्रधानो भावश्रावकधर्म इत्यर्थः । कीदृशोऽसावित्याह । परम् अबन्ध्यमिह भवान्तरे वा । चारित्रकारणं सर्वविरतिहेतुः ॥

ननु कथं परं चारित्रकारणमसावित्याशंक्याह ।

**पदंपदेन मेधावी यथारोहति पर्वतम् ।**
**सम्यक् तथैव नियमाद्धीरश्चारित्रपर्वतम् ॥ ९८ ॥**

इति ॥ इह पदं पदिकोच्यते । ततः पदेन पदेन यदारोहणं तन्निपातनात् पदंपदेन इत्युच्यते । ततः पदंपदेन मेधावी बुद्धिमान् । यथा इति दृष्टान्तार्थः । आरोहत्याक्रामति पर्वतमुज्जयन्तादिकं सम्यक् हस्तपादादिशरीरावयवभङ्गाभावेन । तथैव तेनैव प्रकारेण नियमादवश्यतया धीरो निःकलङ्कानुपालितश्रमणोपासकसमाचारश्चरित्रपर्वतं सर्वविरतिमहाशैलमिति ॥

नन्वेतदपि कथमित्यमित्याह ।

**स्तोकान्गुणान्समाराध्य बहूनामपि जायते ।**
**यस्मादाराधनायोग्यस्तस्मादादावयं मतः ॥ ९९ ॥**

इति ॥ स्तोकांस्तुच्छान् गुणान् श्रमणोपासकावस्थोचितान् समाराध्य पालयित्वा बहूनां सुश्रमणोचितगुणानाम् । स्तोका-

नामाराधनायोग्यो जात एवेत्यपिशब्दार्थः। जायते भवति। यस्मात्कारणात् आराधनायोग्यः परिपालनोचितः अविकलाल्पगुणाराधनाबलप्रक्षीणबहुगुणलाभबाधककर्मकलङ्कत्वेन तद्गुणलाभसामर्थ्यभावात् तस्मात्कारणात् आदौ प्रथमत एवायमनन्तरप्रोक्तो गृहस्थधर्मो मतः सुधियां संमत इति। पुरुषविशेषापेक्षोऽयं न्यायः अन्यथा तथाविधाध्यवसायसामर्थ्यादत एवाबलीभूतचारित्रमोहानां स्थूलभद्रादीनामेतत्क्रममन्तरेणापि परिशुद्धसर्वविरतिलाभस्य शास्त्रेषु श्रूयमाणत्वात्॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ विशेषतो गृहस्थधर्मविधिस्तृतीयोऽध्यायः समाप्तः॥ ३॥

# चतुर्थोऽध्यायः ।

व्याख्यातस्तृतीयोऽध्यायः । साम्प्रतं चतुर्थ आरभ्यते । तस्य चेदमादिसूत्रम् ।

**एवं विधिसमायुक्तः सेवमानो गृहाश्रमम् ।**
**चारित्रमोहनीयेन मुच्यते पापकर्मणा ॥ १ ॥**

इति ॥ एवमुक्तरूपेण विधिना सामान्यतो विशेषतश्च गृहस्थधर्मलक्षणेन समायुक्तः संपन्नः सेवमानोऽनुशीलयन् गृहाश्रमं गृहवासम् । किमित्याह । चारित्रमोहनीयेन प्रतीतरूपेण मुच्यते परित्यज्यते पापकर्मणा पापप्रकृत्यात्मकेन ॥

एतदपि कथमित्याह ।

**सदाज्ञाराधनायोगाद्भावशुद्धेर्नियोगतः ।**
**उपायसंप्रवृत्तेश्च सम्यक्चारित्ररागतः ॥ २ ॥**

इति ॥ सन् अकलङ्कितो य आज्ञाराधनायोगो यतिधर्माभ्यासासहेनादौ श्रावकधर्मोऽभ्यसनीय इत्येवंलक्षणो जिनोपदेशसंबन्धः तस्मात् । यका भावशुद्धिर्मनोनिर्मलता तस्या नियोगतोऽवश्यतया । तथोपायसंप्रवृत्तेश्चोपायेन शुद्ध-

हेत्वङ्गीकरणरूपेण प्रवृत्तेश्चेष्टनात्। चकारो हेत्वन्तरसमुच्चये। इयमपि कुत इत्याह। सम्यक्चारित्ररागतः निर्व्याजचारित्राभिलाषात्। इदमुक्तं भवति। सदाज्ञाराधनायोगाद्युक्ता भावशुद्धिर्या च[1] सम्यक्चारित्ररागत[2] उपायसंप्रवृत्तिरणुव्रतादिपालनरूपा ताभ्यामुभाभ्यामपि[3] हेतुभ्यां चारित्रमोहनीयेन मुच्यते न पुनरन्यथेति।

आह। इदमपि कथं सिद्धम्। यथेत्थं चारित्रमोहनीयेन मुच्यते ततः परिपूर्णप्रत्याख्यानभाग्भवतीत्याशंक्याह।

**विशुद्धं सदनुष्ठानं स्तोकमप्यर्हतां मतम्।**
**तत्त्वेन तेन च प्रत्याख्यानं ज्ञात्वा सुबह्वपि॥ ३॥**

इति॥ विशुद्धं निरतिचारम् अत एव सत्सुन्दरम् अनुष्ठानं स्थूलप्राणातिपातविरमणादि। स्तोकमप्यन्यतमैकभङ्गकप्रतिपत्त्याल्पम्। बहु तावन्मतमेवेत्यपिशब्दार्थः। अर्हतां पारगतानां मतमभीष्टम्। कथमित्याह। तत्त्वेन तात्त्विकस्वरूपतया। न पुनरतिचारकालुष्यदूषितं बह्वप्यनुष्ठानं सुन्दरं मतम्। तेन च तेन पुनर्विशुद्धेनानुष्ठानेन करणभूतेन स्तोकेनापि कालेन प्रत्याख्यानमाश्रवद्वारनिरोधलक्षणं ज्ञात्वा गुरुमूले श्रुतधर्मतया सम्यगवबुध्य प्रत्याख्यानस्य फलं

---

१ B C omit. २ B C °चानुरागत°। ३ B C omit उभाभ्याम्।

हेतुं च सुबह्वपि सर्वपापस्थानविषयतया भूयिष्ठमपि करोति इति[१] गम्यते । स्तोकं तावदनुष्ठानं संपन्नमेवेत्यपिशब्दार्थः । अयमभिप्रायः । स्तोकादप्यनुष्ठानादत्यन्तविशुद्धात्मकाभ्यासात्कालेन[२] प्रत्याख्यानस्वरूपादिज्ञातुर्भूयिष्ठमपि प्रत्याख्यानं संपद्यत इति ॥

**इति विशेषतो गृहस्थधर्म उक्तः । सांप्रतं यतिधर्मावसर इति यतिमनुवर्णयिष्यामः ॥ ४ ॥**

इति ॥ प्रतीतार्थमेव । यत्यनुवर्णनमेवाह ।

**अर्होऽर्हसमीपे विधिप्रव्रजितो यतिः ॥ ५ ॥**

इति । अर्हः प्रव्रज्यार्हो वक्ष्यमाण एव । अर्हस्य प्रव्रज्यादानयोग्यस्य वक्ष्यमाणगुणस्यैव गुरोः समीपे पार्श्वे विधिना वक्ष्यमाणेनैव प्रव्रजितो गृहीतदीक्षो यतिर्मुनिरित्युच्यत इति ॥

यथोद्देशं निर्देश इति न्यायात्प्रव्रज्यार्हमेवाभिधित्सुराह ।

**अथ प्रव्रज्यार्हः । आर्यदेशोत्पन्नो विशिष्टजातिकुलान्वितः क्षीणप्रायकर्ममलः । तत एव विमलबुद्धिः । दुर्लभं मानुष्यं जन्ममरणनिमित्तं संपदश्चपला विषया दुःखहेतवः संयोगे वियोगः प्रति-**

---

१ C omits.   २ B C omit सकाशात्

**क्षणं मरणं दारुणो विपाक इत्यवगतसंसारनैर्गुण्यः। तत एव तद्विरक्तः प्रतनुकषायोऽल्पहास्यादिः कृतज्ञो विनीतः प्रागपि राजामात्यपौरजनबहुमतोऽद्रोहकारी कल्याणाङ्गः श्राद्धः स्थिरः समुपसंपन्नश्च ॥ ६ ॥**

इति ॥ एतत्सर्वं सुगमम्। परम् अथ इत्यानन्तर्यार्थः। प्रव्रजनं पापेभ्यः प्रकर्षेण शुद्धचरणयोगेषु व्रजनं गमनं प्रव्रज्या तस्या अर्हो योग्यः प्रव्रज्यार्हो जीवः। कीदृश इत्याह। आर्यदेशोत्पन्नः मगधाद्यर्धषड्विंशतिमण्डलमध्यलब्धजन्मा। तथा विशिष्टजातिकुलान्वितः विशुद्धवैवाह्यचतुर्वर्णान्तर्गतमातृपितृपक्षरूपजातिकुलसंपन्नः। तथा क्षीणप्रायकर्ममलः क्षीणप्राय उत्सन्नप्रायः कर्ममलो ज्ञानावरणमोहनीयादिरूपो यस्य स तथा। तथा तत एव विमलबुद्धिः यत एव क्षीणप्रायकर्ममलः तत एव हेतोर्विमलबुद्धिर्निर्मलीमसमतिः प्रतिक्षणं मरणम् इति समयप्रसिद्धावधिमरणापेक्षयेति। पठ्यते च।

यामेव रात्रिं प्रथमामुपैति
गर्भे वसत्यै नरवीर लोकः।
ततः प्रभृत्यस्खलितप्रयाणः
स प्रत्यहं मृत्युसमीपमेति ॥ १ ॥

नरवीर इति व्यासेन युधिष्ठिरस्य संबोधनमिति।

दारुणो विपाकः मरणस्यैव इति गम्यते सर्वाभावकारित्वात्तस्येति। प्रागपि इति प्रव्रज्याप्रतिपत्तिपूर्वकाल एवेति। स्थिर इति प्रारब्धकार्यस्यापान्तराल एव न परित्यागकारी। समुपसंपन्नः इति सम् इति सम्यग्वृत्त्या सर्वथात्मसमर्पणरूपया उपसंपन्नः सामीप्यमागत इति[1]॥

इत्थं प्रव्रज्यार्हमभिधाय प्रव्राजकमाह॰।

**गुरुपदार्हस्त्वित्थंभूत एव। विधिप्रतिपन्नप्रव्रज्यः समुपासितगुरुकुलः अस्खलितशीलः सम्यगधीतागमः तत एव विमलतरबोधात्तत्त्ववेदी उपशान्तः प्रवचनवत्सलः सत्त्वहितरतः आदेयः अनुवर्तकः गम्भीरः अविषादी उपशमलब्ध्यादिसंपन्नः प्रवचनार्थवक्ता स्वगुर्वनुज्ञातगुरुपदश्चेति ॥७॥**

इति॥ गुरुपदार्हः प्रव्राजकपदयोग्यः। तुः पूर्वस्माद्विशेषणार्थः। इत्थंभूत एव प्रव्रज्यार्हगुणयुक्त एव सन् न पुनरन्यादृशोऽपि तस्य स्वयं निर्गुणत्वेन प्रव्राज्यबीजगुणबीजनिक्षेपकरणायोगात्। किमित्याह विधिप्रतिपन्नप्रव्रज्यः वक्ष्यमाणक्रमाधिगतदीक्षः। समुपासितगुरुकुलः विधिवदाराधितगुरुपरिवारभावः। अस्खलितशीलः प्रव्रज्याप्रतिपत्तिप्रभृत्येवाखण्डितव्रतः। सम्यगधीतागमः सूत्रार्थोभयज्ञाम-

[1] B C omit.

क्रियादिगुणभाजो गुरोरासेवनेनाधिगतपारगतगदितागमरहस्यः। यतः पठ्यते।

तित्थे सुत्तत्थाणं गहणं विहिणा उ तत्थ तित्थमिदम्।
उभयन्नू चेव गुरू विही उ विणयाइओ चित्तो॥ १॥
उभयन्नूवि य किरियापरो दढं पवयणाणुरागी य।
ससमयपरूवगो परिणओ य पन्नो य अच्चत्थं ति॥ २॥

तत एव विमलतरबोधात्तत्त्ववेदी[1] तत एव सम्यगधीतागमत्वादेव हेतोर्यो विमलतरो बोधः शेषान् सम्यगधीतागमानपेक्ष्य स्फुटतरः प्रज्ञोन्मेषः तस्मात्सकाशात्तत्त्ववेदी जीवादिवस्तुविज्ञाता। उपशान्तः मनोवाक्कायविकारविकलः प्रवचनवत्सलः यथानुरूपं साधुसाध्वीश्रावकश्राविकारूपचतुर्वर्णश्रमणसङ्घवात्सल्यविधायी सत्त्वहितरतः तत्तच्चित्रोपायोपादानेन सामान्येन सर्वसत्त्वप्रियकरणपरायणः। आदेयः परेषां ग्राह्यवचनचेष्टः अनुवर्तकः चित्रस्वभावानां प्राणिनां गुणान्तराधानधियानुवृत्तिशीलः गम्भीरः रोषतोषाद्यवस्थायामप्यलब्धमध्यः अविषादी न परीषहाद्यभिभूतः कायसंरक्षणादौ न दैन्यमुपयाति। उपशमलब्ध्यादिसंपन्नः उपशमलब्धिः परमुपशमयितुं सामर्थ्यलक्षणा। आदिशब्दादुपकरणलब्धिः स्थिरहस्तलब्धिश्च गृह्यते। ततस्ताभिः संपन्नः समन्वितः। प्रवचनार्थवक्ता यथावस्थितागमार्थप्रज्ञापकः

१ B C omit the entire *pratīka*.

"स्वगुर्वनुज्ञातगुरुपदः स्वगुरुणा स्वगच्छनायकेनानुज्ञातगुरुपदः समारोपिताचार्यपदवीकः । चकारो विशेषणसमुच्चये । इतिशब्दो गुरुगुणेयत्तासूचकः । अत्र च षोडश प्रव्रज्यार्हगुणाः पञ्चदश पुनर्गुरुगुणा निरूपिता इति । उत्सर्गपक्षश्चायम् ॥

अथात्रैवापवादमाह ।

## पादार्धगुणहीनौ मध्यमावरौ ॥ ८ ॥

इति ॥ पादेन चतुर्थभागेनार्धेन च प्रतीतरूपेण प्रस्तुतगुणानां हीनौ न्यूनौ प्रव्राज्यप्रव्राजकौ मध्यमावरौ मध्यमजघन्यौ क्रमेण योग्यौ स्यातामिति ॥

अथैतस्मिन्नेवार्थे परतीर्थिकमतानि दश स्वमतं चोपदर्शयितुमिच्छुः "नियम एवायमिति वायुः" इत्यादिकं "भवन्ति त्वल्पा[1] अप्यसाधारणगुणाः[2] कल्याणोत्कर्षसाधकाः" इत्येतत्पर्यन्तं सूत्रकदम्बकमाह ।

## नियम एवायमिति वायुः ॥ ९ ॥

इति । नियम एवावश्यंभाव एवायं यदुत परिपूर्णगुणो योग्यो नापरः पादप्रमाणादिहीनगुणः स्यादित्येवं वायुर्वायुनामा प्रवादिविशेषः । प्राह इति सर्वत्र क्रिया गम्यते ॥

---

१ B C D P omit तु । २ B C D omit असाधारणा ।

कुत इत्याह।

**समग्रगुणसाध्यस्य तदर्धभावेऽपि तत्सिद्ध्यसंभवात्॥१०॥**

इति॥ समग्रगुणसाध्यस्य कारणरूपसमस्तगुणनिष्पाद्यस्य कार्यस्य तदर्धभावेऽपि तेषां गुणानामर्धभाव उपलक्षणत्वात्पादहीनभावे च तत्सिद्ध्यसंभवात् तस्माद्गुणार्धात्पादोनगुणभावाद्वा या सिद्धिः निष्पत्तिः तस्याः असंभवादघटनात् अन्यथा कार्यकारणव्यवस्थोपरमः प्रसज्यत इति॥

**नैतदेवमिति वाल्मीकिः॥११॥**

इति॥ न नैवैतदायुक्तमित्येतत्प्राह वाल्मीकिर्वल्मीकोद्भव ऋषिविशेषः।

कुत इत्याह।

**निर्गुणस्य कथंचित्तद्गुणभावोपपत्तेः॥१२॥**

इति॥ निर्गुणस्य सतो जीवस्य कथंचित्केनापि प्रकारेण स्वगतयोग्यताविशेषलक्षणेन प्रथमं तद्गुणभावोपपत्तेस्तेषां समग्राणां प्रव्राज्यगुणानां प्रव्राजकगुणानां वा[१] भावोपपत्तेर्घटनासंभवात्। तथाहि यथा निर्गुणोऽपि सन् जन्तुर्विशिष्टकार्यहेतून् प्रथमं गुणान् लभते तथा यदि तद्गुणाभावेऽपि कथंचिद्विशिष्टमेव कार्यं लप्स्यते तदा को नाम

---

१ B C omit.

विरोधः स्यात् । दृश्यते च दरिद्रस्यापि कस्यचिदकस्मादेव राज्यादिविभूतिलाभ इति ॥

**अकारणमेतदिति व्यासः ॥ १३ ॥**

इति ॥ अकारणमप्रयोजकं निष्फलमित्यर्थः । एतद्वाल्मीकिनिरूपितं वाक्यम् । इत्येतद्ब्रूते व्यासः कृष्णद्वैपायनः ॥

कुत इत्याह ।

**गुणमात्रासिद्धौ गुणान्तरभावनियमाभावात् ॥ १४ ॥**

इति ॥ गुणमात्रस्य स्वाभाविकस्य तुच्छस्यापि गुणस्य प्रथममसिद्धौ सत्यां गुणान्तरस्यान्यस्य गुणविशेषस्य भाव उत्पादो गुणान्तरभावः तस्य नियमादवश्यतयाभावादसत्त्वात् । स्वानुरूपकारणपूर्वको हि कार्यव्यवहारः । यतः पठ्यते ।

नाकारणं भवेत्कार्यं नान्यकारणकारणम् ।
अन्यथा न व्यवस्था स्यात्कार्यकारणयोः क्वचित् ॥ १ ॥

नान्यकारणकारणम् इति न नैवान्यस्मात्स्वव्यतिरिक्तस्य कारणमन्यकारणम् अन्यकारणं कारणं यस्य तत्तथा । पटादेः कारणं सूत्रपिण्डादि घटादेः कारणं न भवतीति भावः ॥

**नैतदेवमिति सम्राट् ॥ १५ ॥**

इति ॥ नैतदेवमिति प्राग्वत् । संम्राट् राजर्षिविशेषः प्राह ॥

कुत इत्याह ।

**संभवादेव श्रेयस्त्वसिद्धेः ॥ १६ ॥**

इति ॥ संभवादेव योग्यत्वादेव[१] न पुनर्गुणमात्रादेव केवलात्संभवविकलात् । श्रेयस्त्वसिद्धेः सर्वप्रयोजनानां श्रेयोभावनिष्पत्तेः । इदमुक्तं भवति । गुणमात्रे सत्यपि यावदद्यापि प्रव्राज्यादिर्जीवो विवक्षितं कार्यं[२] प्रति योग्यतां न लभते न तावत्तेनारब्धमपि सिध्यति अनधिकारित्वात्तस्य अनधिकारिणश्च सर्वत्र कार्ये प्रतिषिद्धत्वात् । अतो योग्यतैव सर्वकार्याणां श्रेयोभावसंपादिकेति ।

**यत्किंचिदेतदिति नारदः ॥ १७ ॥**

इति ॥ यत्किंचिन्न किंचिदित्यर्थः । एतत्सम्प्रागुक्तम् इति नारदो वक्ति ॥

कुत इत्याह ।

**गुणमात्राद्गुणान्तरभावेऽप्युत्कर्षायोगात् ॥ १८ ॥**

इति ॥ गुणमात्राद्योग्यतामात्ररूपात् गुणान्तरस्य तथाविधस्य भावेऽप्युत्कर्षायोगादुत्कृष्टानां गुणानामसंभवात् । अन्यथा योग्यतामात्रस्य प्रायेण सर्वप्राणिनां संभवादुत्कृष्टगुणप्रसङ्गेन न कश्चित्सामान्यगुणः स्यात् । अतो विशिष्टैव योग्यता गुणोत्कर्षसाधिकेति सिद्धमिति ॥

---

१ C adds न पुनर्गुणात्वादेव । २ B D विवक्षितकार्यं ।

**सोऽप्येवमेव भवतीति वसुः ॥ १९ ॥**

इति ॥ सोऽपि गुणोत्कर्षः किं पुनर्गुणमात्राद्गुणान्तरसिद्धिरित्यपिशब्दार्थः । एवमेव पूर्वगुणानामुत्तरगुणारम्भकत्वेन भवति निष्पद्यते निर्बीजस्य कस्यचित्कार्यस्य कदाचिदप्यभावात् । इत्येतद्वसुः समयप्रसिद्धो राजविशेषो निगदति । एष च मनाग् व्याससमतानुसारीति ॥

**अयुक्तं कार्षापणधनस्य तदन्यविटपनेऽपि कोटिव्यवहारारोपणमिति क्षीरकदम्बकः ॥ २० ॥**

इति ॥ अयुक्तमघटमानकम् कार्षापणधनस्यातिजघन्यरूपकविशेषसर्वस्वस्य व्यवहारिणो लोकस्य तदन्यविटपनेऽपि तस्मात्कार्षापणादन्येषां कार्षापणादीनां विटपन उपार्जने किं पुनस्तदन्याविटपन इत्यपिशब्दार्थः । कोटिव्यवहारारोपणं कोटिप्रमाणानां दीनारादीनां व्यवहारे आत्मन आरोपणमिति । यतोऽतिबहुकालसाध्योऽयं व्यवहारः न च तावन्तं कालं व्यवहारिणां जीवितं संभाव्यते । एवं च चीरकदम्बनारदयोर्न कश्चिन्मतभेदो यदि परं वचनकृत एवेति ॥

**न दोषो योग्यतायामिति विश्वः ॥ २१ ॥**

इति ॥ न नैव दोषोऽघटमानत्वं; कश्चिद्योग्यतायां

कार्षापणधनस्यापि तथाविधभाग्योदयात्प्रतिदिनं शतगुणसहस्रगुणादिकार्षापणोपार्जनेन कोटिव्यवहारारोपणोचितत्वलक्षणायाम् । श्रूयन्ते च केचित्पूर्वं तुच्छव्यवहारा अपि तथाविधभाग्यवशेन स्वल्पेनैव कालेन कोटिव्यवहारमारूढाः । इत्येतद्विशो विशनामा प्रवादी प्राहेति । अयं च मनाक् सत्याप्रतमनुसरतीति ॥

**अन्यतरवैकल्येऽपि गुणबाहुल्यमेव सा तत्त्वत इति सुरगुरुः ॥ २२ ॥**

इति ॥ अन्यतरस्य कस्यचिद्गुणस्य वैकल्येऽपि किं पुनरवैकल्य इत्यपिशब्दार्थः । गुणबाहुल्यमेव गुणभूयस्त्वमेव । सा पूर्वसूत्रसूचिता योग्यता तत्त्वतः परमार्थवृत्त्या प्रवर्त्तते अतो न पादगुणहीनादिचिन्ता कार्या । इत्येतत्सुरगुरुर्बृहस्पतिरुवाचेति ॥

**सर्वमुपपन्नमिति सिद्धसेनः ॥ २३ ॥**

इति ॥ समस्तेष्वपि धर्मार्थकाममोक्षव्यवहारेषु पुरुषपराक्रमसाध्येषु विषये यद्यद् उपपन्नं घटमानं निमित्ततया बुद्धिमद्भिरुत्प्रेक्ष्यते तत्सर्वमखिलम् । सा इत्यनुवर्तते । उपपन्नत्वस्य योग्यताया अभिन्नत्वात् । इति सिद्धसेनो नीतिकारः शास्त्रकृद्विशेषो जगाद ॥

इत्थं दशपरतीर्थिकमतान्युपदर्श्य स्वमतमुपदर्शयन्नाह ।

**भवन्ति त्वल्पा अप्यसाधारणगुणाः कल्याणोत्कर्षसाधकाः ॥ २४ ॥**

इति ॥ भवन्ति न न भवन्ति । तुः पूर्वमतेभ्योऽस्य वैशिष्ट्यख्यापनार्थः । अल्पा अपि परिमिता अपि किं पुनरनल्पा इत्यपिशब्दार्थः । गुणा आर्यदेशोत्पन्नतादयोऽसाधारणाः सामान्यमानवेष्वसंभवन्तः कल्याणोत्कर्षसाधकाः प्रव्रज्याद्युत्कृष्टकल्याणनिष्पादकाः असाधारणगुणानां नियमादितरगुणाकर्षणावन्ध्यकारणत्वात् । इति युक्तमुक्तमादौ यदुत पादार्धगुणहीनौ मध्यमावरौ योग्याविति । अत्र वायुवाल्मीकिव्याससम्राड्नारदवसुक्षीरकदम्बमतानां कस्यचित्केनापि संवादेऽप्यन्यतरेण निराक्रियमाणत्वादनादरणीयतैव । विश्वसुरगुरुसिद्धसेनमतेषु च यद्यसाधारणगुणानादरेण योग्यताङ्गीक्रियते तदा न सम्यक् तस्याः परिपूर्णकार्यासाधकत्वात् । अथान्यथा तदास्मन्मतानुवाद एव तैः शब्दान्तरेण कृतः स्यात् न पुनः स्वमतस्थापनं किंचिदिति । इत्युक्तौ प्रव्राज्यप्रव्राजकौ ॥

अधुना प्रव्रज्यादानविधिमभिधित्सुराह ।

**उपस्थितस्य प्रश्नाचारकथनपरीक्षादिर्विधिः ॥ २५ ॥**

इति ॥ उपस्थितस्य स्वयं प्रव्रज्यां ग्रहीतुं समीपमागतस्य प्रश्नश्चाचारकथनं च परीक्षा च प्रश्नाचारकथनपरीक्षाः । ता

आदिर्यस्य स तथा। आदिशब्दात्कण्ठतः सामायिकादिसूत्रप्रदानतथाविधानुष्ठानाभ्याससंग्रहः। विधिः क्रमः प्रव्रज्याप्रदाने पूर्वसूत्रसूचित[1] एषः। इदमुक्तं भवति। सद्धर्मकथाक्षिप्ततया प्रव्रज्याभिमुख्यमागतो भव्यजन्तुः पृच्छनीयः। यथा को वत्स त्वं किं निमित्तं वा प्रव्रजसि। ततो यद्यसौ कुलपुत्रकस्तगरानगरादिसुन्दरक्षेत्रोत्पन्नः सर्वाशुभोद्भवभवव्याधिक्षयनिमित्तमेव[2] अहं भगवन् प्रव्रजितुमुद्यतः इत्युत्तरं कुरुते तदासौ प्रश्नशुद्धः। ततोऽस्य दुरनुचरा प्रव्रज्या। कापुरुषाणाम् आरम्भनिवृत्तानां पुनरिह परभवे च परमः[3] कल्याणलाभः। तथा यथैव जिनानामाज्ञा सम्यगाराधिता मोक्षफला तथैव विराधिता संसारफलदुःखदायिनी तथा यथा कुष्ठादिव्याधिमान् क्रियां प्राप्तकालां प्रतिपद्यापथ्यमासेव्यमानोऽप्रवृत्तादधिकं[4] शीघ्रं च विनाशमाप्नोति। एवमेव भावक्रियां संयमरूपां कर्मव्याधिक्षयनिमित्तं प्रपद्य पश्चादसंयमापथ्यसेवी अधिकं कर्म समुपार्जयतीति। एवं तस्य साध्वाचारः कथनीय इति। एवं कथितेऽपि साध्वाचारे निपुणमसौ परीक्षणीयः। यतः

असत्याः सत्यसंकाशाः सत्याश्चासत्यसन्निभाः।
दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम् ॥ १ ॥

---

१ D P पूर्तसूचित। २ B omits भव।
३ B परम०। ४ B प्रवृत्तादिकं।

अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिकौशलाः।
चित्रे निम्नोन्नतानीव चित्रकर्मविदो जनाः॥ २ ॥

परीक्षा च सम्यक्त्वज्ञानचारित्रपरिणतिविषया तैस्तैरुपायैर्विधेया। परीक्षाकालश्च प्रायतः षण्मासाः। तथाविधपात्रापेक्षया त्वल्पो बहुश्च स्यात्। तथा सामायिकसूत्रमकृतोपधानस्यापि कण्ठतो वितरणीयम्। अन्यदपि सूत्रं पात्रतामपेक्ष्याध्यापयितव्यम्।

तथा।

## गुरुजनाद्यनुज्ञा ॥ २६ ॥

इति॥ गुरुजनो मातापित्रादिलक्षणः। आदिशब्दाद्भगिनीभार्यादिशेषसंबन्धिलोकपरिग्रहः। तस्यानुज्ञा प्रव्रजत्वम् इत्यनुमतिरूपा। विधिरित्यनुवर्तते। यदा पुनरसौ तत्तदुपायतोऽनुज्ञापितोऽपि न मुञ्चति तदा यद्विधेयं तदाह।

## तथा तथोपधायोगः ॥ २७ ॥

इति॥ तथा तथा तेन तेन प्रकारेण सर्वथा परैरनुपलक्ष्यमाणेनोपधायोगो मायायाः प्रयोजनम्।

कथमित्याह।

## दुःस्वप्नादिकथनम् ॥ २८ ॥

इति॥ दुःस्वप्नस्य खरोष्ट्रमहिषाद्यारोहणादिदर्शनरूपस्य। आदिशब्दान्मातृमण्डलादिविपरीतालोकनादिग्रहः। तस्य कथनं गुर्वादिनिवेदनमिति।

तथा ।

विपर्ययलिङ्गसेवा ॥ २९ ॥

इति ॥ विपर्ययः प्रकृतिविपरीतभावः । स एव मरणसूचकत्वाल्लिङ्गं तस्य सेवा निषेवणं कार्यं येन स गुर्वादिजनः सन्निहितमृत्युरयं इत्यवबुध्य प्रव्रज्यामनुजानीत इति विपर्ययलिङ्गानि ॥

तेषु स्वयमेवाबुध्यमानेषु किं कृत्यमित्याह ।

दैवज्ञैस्तथा तथा निवेदनम् ॥ ३० ॥

इति ॥ दैवज्ञैर्निमित्तशास्त्रपाठकैस्तथा तथा तेन तेन निमित्तशास्त्रपाठादिरूपेणोपायेन निवेदनं गुर्वादिजनस्य ज्ञापनं विपर्ययलिङ्गानामेव कार्यमिति ॥

नन्वेवं मायाविनः प्रव्रज्याप्रतिपत्तावपि को गुणः स्यादित्याशंक्याह ।

न धर्मे माया ॥ ३१ ॥

इति ॥ न नैव धर्मे साध्ये माया क्रियमाणा माया वञ्चना भवति परमार्थतोऽमायात्वात्तस्याः ॥

एतदपि कुत इत्याह ।

उभयहितमेतत् ॥ ३२ ॥

इति ॥ उभयस्य स्वस्य गुर्वादिजनस्य च हितं श्रेयोरूपमेतदेवं प्रव्रज्याविधौ मायाकरणम् । एतत्फलभूतायाः प्रव्रज्यायाः स्वपरोपकारकत्वात् । पठ्यते च ।

अमायोऽपि हि भावेन माय्येव तु भवेत्क्वचित् ।
पश्येत्स्वपरयोर्यत्र सानुबन्धं हितोदयम् ॥ १ ॥ इति ।

अथेत्थमपि कृते तं विना गुर्वादिजनो निर्वाहमलभमानो न तं प्रव्रज्यार्थमनुजानीते तदा किं विधेयमित्याशंक्याह ।

## यथाशक्ति सौविहित्यापादनम् ॥ ३३ ॥

इति ॥ यथाशक्ति यस्य यावती शक्तिः शतसहस्रादिप्रमाण-निर्वाहहेतुद्रव्यादिसमर्पणरूपा तया सौविहित्यस्य सौस्थ्यस्य आपादनं विधानं येन प्रव्रजितेऽपि तस्मिन्नसौ न सीदति तस्य निर्वाहोपायस्य करणमिति भावः । एवं कृते कृतज्ञता कृता भवति । करुणा च मार्गप्रभावनाबीजम् । ततस्तेनानुज्ञातः प्रव्रजेदिति ॥

अथैवमपि न तं मोक्तुमसावुत्सहते तदा ।

## ग्लानौषधादिज्ञातात्त्यागः ॥ ३४ ॥

इति ॥ ग्लानस्य तथाविधव्याधिबाधावशेन ग्लानिमागतस्य गुर्वादिर्लोकस्य । औषधादिज्ञातादौषधस्य आदिशब्दात्स्व-निर्वाहस्य च ग्रहः तस्य गवेषणमपि औषधादि इत्युच्यते । ततः ग्लानौषधाद्येव ज्ञातं दृष्टान्तः । तस्मात्त्यागः कार्यो गुर्वादेरिति । इदमुक्तं भवति । यथा कश्चित्कुलपुत्रकः कथंचिद-पारं कान्तारं गतो मातापित्रादिसमेतस्तत्प्रतिबद्धस्तत्र व्रजेत् । तस्य च गुर्वादेस्तत्र व्रजतो नियमघाती वैद्यौषधादिरहितपुरुष-मात्रासाध्यस्तथाविधौषधादिप्रयोगयोग्यस्य महानातङ्कः स्यात् ।

तत्र चासौ तत्प्रतिबन्धादेवमालोचयति यथा न भवति नियमादेष गुरुजनो नीरुगौषधादिमन्तरेण औषधादिभावे च संशयः कदाचित्स्यात्कदाचिन्नेति कालसहश्चायम् । ततः संस्थाप्य तथाविधचित्रवचनोपन्यासेन तं तदौषधादिनिमित्तं स्ववृत्तिहेतोश्च त्यजन् सन्नसौ साधुरेव भवति । एष हि त्यागोऽत्याग एव यः पुनरत्यागः स परमार्थतस्त्याग एव । यतः फलमत्र प्रधानम् । धीराश्चैतद्दर्शिन एव भवन्ति । तत औषधसंपादनेन तं जीवयेदपीति संभवात्सत्पुरुषोचितमेतत् । एवं शुक्लपाक्षिको महापुरुषः संसारकान्तारपतितो मातापित्रादिसङ्गतो धर्मप्रतिबद्धो विहरेत् । तेषां च तत्र नियमविनाशकोऽप्राप्तसम्यक्त्वबीजादिना पुरुषमात्रेण साधयितुमशक्यः संभवत्सम्यक्त्वाद्यौषधो दर्शनमोहाद्युदयलक्षणः कर्मातङ्कः स्यात् । तत्र स शुक्लपाक्षिकः पुरुषो धर्मप्रतिबन्धादेवं समालोचयति यदुत विनश्यन्त्येतान्यवश्यं सम्यक्त्वाद्यौषधविरहेण तत्संपादने विभाषा कालसहानि चेमानि व्यवहारतः । ततो यावद्गृहवासं निर्वाहादिचिन्तया तथा तथा संस्थाप्य तेषां सम्यक्त्वाद्यौषधनिमित्तं स्वचारित्रलाभनिमित्तं च स्वकीयौचित्यकरणेन त्यजन् सन्नभीष्टसंयमसिद्ध्या साधुरेव । एष त्यागोऽत्यागस्तत्त्वभावनातोऽत्याग एव च त्यागो मिथ्याभावनातः । तत्त्वफलमत्र प्रधानं बुधानां यतो धीरा एतद्दर्शिन आसन्नभव्याः । एवं च तानि सम्यक्त्वाद्यौषधसंपादनेन जीवयेदात्यन्तिकमपुनर्मरणेनामरणावन्ध्यबीजयोगेन संभवात् सत्पुरुषोचितमेतत । यतो दुःप्रतिकारौ नियमान्मातापितरौ शेषस्य

यथोचितं स्वजनलोकः। एष धर्म्मः सज्जनानां भगवानत्र ज्ञातं परिहरन्नकुशलानुबन्धिमातापित्रादिशोकमिति।

तथा।

## गुरुनिवेदनम्॥ ३५॥

इति॥ तथा इति विध्यन्तरसमुच्चयार्थः। गुरुनिवेदनं सर्वात्मना गुरोः प्रव्राजकस्यात्मसमर्पणं कार्यमिति॥

इत्थं प्रव्राज्यगतं विधिमभिधाय प्रव्राजकगतमाह।

## अनुग्रहधियाभ्युपगमः॥ ३६॥

इति॥ गुरुणानुग्रहधिया सम्यक्त्वादिगुणारोपणबुद्ध्याभ्युपगमः प्रव्राजनीयस्त्वम् एवंरूपः कार्यो न पुनः स्वपरिषत्पूरणादिबुद्ध्येति॥

तथा।

## निमित्तपरीक्षा॥ ३७॥

इति॥ निमित्तानां भाविकार्यसूचकानां शकुनादीनां परीक्षा निश्चयनं कार्यं निमित्तशुद्धेः प्रधानविधित्वादिति॥

तथा।

## उचितकालापेक्षणम्॥ ३८॥

इति॥ उचितस्य प्रव्रज्यादानयोग्यस्य कालस्य विशिष्टतिथिनक्षत्रादियोगरूपस्य गणिविद्यानामप्रकीर्णकनिरूपितस्यापेक्षणमादरणमिति। यतस्तत्र पठ्यते।

तिहिं उत्तराहिं तह रोहिणीहिं कुज्जा उ सेहनिक्खमणं ।
गणिवायए अणुन्ना महव्वयाणं च आहरणा ॥ १ ॥

तथा ।

चउद्दसिं पन्नरसिं वज्जेज्जा अट्ठमिं च नवमिं च ।
छट्ठिं च चउत्थिं बारसिं च दोण्हं पि पक्खाणं ॥ २ ॥

इत्यादि ॥

तथा ।

## उपायतः कायपालनम् ॥ ३९ ॥

इति ॥ उपायत उपायेन निरवद्यानुष्ठानाभ्यासरूपेण कायानां पृथिव्यादीनां पालनं रक्षणं प्रविव्रजिषुः प्राणी कार्यत इति ॥

तथा ।

## भाववृद्धिकरणम् ॥ ४० ॥

इति ॥ भावस्य प्रव्रज्याभिलाषलक्षणस्य वृद्धिरुत्कर्षः । तस्यास्तैस्तैः प्रव्रज्याफलप्ररूपणादिलक्षणैर्वचनैः करणं संपादनं तस्य ॥

तथा ।

## अनन्तरानुष्ठानोपदेशः ॥ ४१ ॥

इति ॥ अनन्तरानुष्ठानस्य प्रव्रज्याग्रहणानन्तरमेव करणीयस्य गुर्वन्तेवासितातद्भक्तिबहुमानादेरनन्तराध्याय एव वक्ष्यमाणस्योपदेशनस्य कार्यः ॥

तथा ।

शक्तितस्त्यागतपसी ॥ ४२ ॥

इति ॥ शक्तितः शक्तिमपेक्ष्य त्यागं चार्थव्ययलक्षणं देवगुरुसङ्घपूजादौ विषये तपश्चानशनादि कारणीयः स इति ॥

तथा ।

क्षेत्रादिशुद्धौ वन्दनादिशुद्ध्या शीलारोपणम् ॥ ४३ ॥

इति ॥ क्षेत्रस्य भूमिभागलक्षणस्य आदिशब्दाद्दिशश्च शुद्धौ सत्यां वन्दनादिशुद्ध्या चैत्यवन्दनकायोत्सर्गकारणसाधुनेपथ्यसमर्पणादिसमाचारचारुतारूपया शीलस्य सामायिकपरिणामरूपस्य करेमि भन्ते सामायिकं इत्यादिदण्डकोच्चारणपूर्वकमारोपणं प्रव्रज्यार्हे न्यसनं गुरुणा कार्यमिति । तत्र क्षेत्रशुद्धिरिक्षुवनादिरूपा । यथोक्तम् ।

उच्छुवणे सालिवणे पउमसरे कुसुमिए व वणसण्डे ।
गम्भीरसाणुणाए पयाहिणजले जिणहरे वा ॥ १ ॥

तथा ।

पुव्वाभिमुहो उत्तरमुहो व दिज्जाऽहवा पडिच्छेज्जा ।
जाए जिणादओ वा दिसाए जिणचेइयाइं वा ॥ २ ॥

इति ॥

शीलमेव व्याचष्टे ।

असङ्गतया समशत्रुमित्रता शीलम् ॥ ४४ ॥

इति ॥ असङ्गतया क्वचिदप्यर्थे प्रतिबन्धाभावेन समशत्रुमित्रता शत्रौ मित्रे च समानमनस्कता शीलमुच्यत इति ॥

ननु स्वपरिणामसाध्यं शीलं तत्किमस्य चैत्यादिशुद्धारोपणेने-त्याशंक्याह।

**अतोऽनुष्ठानात्तद्भावसंभवः॥ ४५॥**

इति॥ अतोऽस्मादनुष्ठानादुक्तरूपशीलारोपलक्षणात्तद्भवस्य शीलपरिणामलक्षणस्य संभवः समुत्पादः प्रागसतोऽपि जायते सतस्व स्थिरीकरणमिति॥

तथा।

**तपोयोगकारणं चेति॥ ४६॥**

इति॥ स एवं विधिप्रव्रजितः सन् गुरुपरंपरयागतमाचाम्लादितपोयोगं कार्यत इति॥

अथोपसंहारमाह[१]।

**एवं यः शुद्धयोगेन परित्यज्य गृहाश्रमम्।**
**संयमे रमते नित्यं स यतिः परिकीर्तितः॥ ४७॥**

इति॥ एवमुक्तप्रकारेण यो भव्यविशेषः शुद्धयोगेन सम्यगाचारविशेषेण परित्यज्य हित्वा गृहाश्रमं गृहस्थावस्थां संयमे हिंसादिविरमणरूपे रमत आसक्तिमान् भवति स एवंगुणो यतिरुक्तनिरुक्तः परिकीर्तित इति॥

अत्रैवाभ्युच्चयमाह।

**एतत्तु संभवत्यस्य सदुपायप्रवृत्तितः।**
**अनुपायात्तु साध्यस्य सिद्धिं नेच्छन्ति पण्डिताः॥४८॥**

१ B C omit from here down to अत्रैवाभ्युच्चयमाह at the end of the commentary to sûtra 47.

इति ॥ एतत्पुनर्यतित्वं संभवत्यस्य प्रव्रजितस्य सतः । कुत इत्याह सदुपायप्रवृत्तितः सता सुन्दरेणोपायेन अर्होऽर्हसमीपे इत्याद्युक्तरूपेण प्रवृत्तेश्चेष्टनात् । अत्रैव व्यतिरेकमाह अनुपायात्तु उपायविपर्ययात्पुनः सिद्धिं सामान्येन सर्वस्य कार्यस्य निष्पत्तिं नेच्छन्ति न प्रतिपद्यन्ते पण्डिताः कार्यकारणविभागकुशलाः यतः पठन्ति नाकारणं भवेत्कार्यम् इत्यादि ॥

उक्तविपर्यये दोषमाह ।

**यस्तु नैवंविधो मोहाच्चेष्टते शास्त्रबाधया ।**
**स तादृग्लिङ्गयुक्तोऽपि न गृही न यतिर्मतः ॥ ४९ ॥**

इति ॥ यस्तु यः पुनरद्याप्यतुच्छीभूतभवभ्रमणशक्तिः । नैवंविधः किन्तूक्तविधिविपरीतो मोहादज्ञानाच्चेष्टते प्रवर्तते शास्त्रबाधया शास्त्रार्थोल्लङ्घनेन स प्राणी तादृग्लिङ्गयुक्तोऽपि शुद्धयतितुल्यनेपथ्यसनाथोऽपि किं पुनरन्यथाभूतनेपथ्य इत्यपिशब्दार्थः । न गृही गृहस्थाचाररहितत्वात् । न यतिः भावचारित्रविरहितत्वादिति ॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ यतिविधिश्चतुर्थोऽध्यायः समाप्तः ॥

---

# पञ्चमोऽध्यायः ॥

व्याख्यातश्चतुर्थोऽध्यायः । अथ पञ्चमो व्याख्यायते । तस्य चेदमादिसूत्रम् ।

बाहुभ्यां दुस्तरो यद्वत्क्रूरनक्रो महोदधिः ।
यतित्वं दुष्करं तद्वदित्याहुस्तत्त्ववेदिनः ॥ १ ॥

इति ॥ बाहुभ्यां भुजाभ्यां दुस्तरः कृच्छ्रेण तरीतुं शक्यः । यद्वत् इति दृष्टान्तार्थः । क्रूरनक्रः क्रूरा भीषणा नक्रा जलजन्तुविशेषा उपलक्षणत्वान्मत्स्यमकरसुंसुमारादयश्च यत्र स तथा । महोदधिर्महासमुद्रः । यतित्वं श्रामण्यं दुष्करं दुरनुष्ठेयम् । तद्वत् इति दार्ष्टान्तिकार्थः । इत्येतदाहुरुक्तवन्तः । क इत्याह तत्त्ववेदिनः प्रव्रज्यापरमार्थज्ञातार इति ॥

अस्यैव दुष्करत्वे हेतुमाह ।

अपवर्गः फलं यस्य जन्ममृत्यादिवर्जितः ।
परमानन्दरूपश्च दुष्करं तन्न चाद्भुतम् ॥ २ ॥

इति ॥ अपवर्गो मोक्षः फलं कार्यं यस्य यतित्वस्य जन्ममृत्यादिवर्जितो जन्ममरणजरादिसंसारविकारविरहितः । तथा परमानन्दरूपः सर्वोपमातीतानन्दस्वभावः । चकारो विशेषणसमुच्चये । दुष्करं कृच्छ्रेण कर्तुं शक्यम् तद् यतित्वम् । न च- नैवाद्भुतमाश्चर्यमेतत् । अत्यन्तमहोदयानां विद्यामन्त्रौषध्यादिसाधनानामिहैव दुष्करत्वोपलम्भादिति ॥

एवं तर्हि कथमिति दुष्करं यतित्वं कर्तुं शक्यं स्यादित्याशंक्याह।

**भवस्वरूपविज्ञानात्तद्विरागाच्च तत्त्वतः।**
**अपवर्गानुरागाच्च स्यादेतन्नान्यथा क्वचित्॥ ३॥**

इति॥ भवस्वरूपस्येन्द्रजालमृगतृष्णिकागन्धर्वनगरस्वप्नादिकल्पस्य विज्ञानात्सम्यक्कृतलोचनेनावलोकनात् प्राक् तदनु तद्विरागात्तप्तलोहपदन्यासोद्विजनन्यायेन भवस्वरूपोद्वेगात्। चकारो हेत्वन्तरसमुच्चये। तत्त्वतो निर्व्याजवृत्त्या। तथापवर्गानुरागात्परमपदस्पृहातिरेकात्। चशब्दः प्राग्वत्। स्याद्भवेदेतद् यतित्वम्। नान्यथा नान्यप्रकारेण क्वचित्क्षेत्रे काले वा सम्यगुपायमन्तरेणोपेयस्य कदाचिदभावादिति॥

**इत्युक्तो यतिः। अधुनास्य धर्ममनुवर्णयिष्यामः। यतिधर्मो द्विविधः सापेक्षयतिधर्मो निरपेक्षयतिधर्मश्च॥ ४॥**

इति॥ प्रतीतार्थमेव। परं गुरुगच्छादिसाहाय्यमपेक्षमाणो यः प्रव्रज्यां परिपालयति स सापेक्ष इतरस्तु निरपेक्षो यतिः। तयोर्धर्मोऽनुक्रमेण गच्छवासलक्षणो जिनकल्पादिलक्षणश्चेति॥

**तच्च सापेक्षयतिधर्मः॥ ५॥**

इति॥ तच्च तयोः सापेक्षनिरपेक्षयतिधर्मयोर्मध्यात्सापेक्षयतिधर्मोऽयं भण्यते॥

यथा ।

गुर्वन्तेवासिता ॥ ६ ॥

इति ॥ गुरोः प्रव्राजकाचार्यस्यान्तेवासिता शिष्यभावो यावज्जीवमनुष्ठेया तच्छिष्यभावस्य महाफलत्वात् । पठ्यते च ।

णाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य ।
धन्ना आवकहाए गुरुकुलवासं न मुञ्चन्ति ॥ १ ॥

तथा ।

तद्भक्तिबहुमानौ ॥ ७ ॥

इति ॥ तस्मिन्गुरौ भक्तिः समुचितान्नपानादिनिवेदनपादक्षालनादिरूपा बहुमानश्च भावप्रतिबन्धः ॥

तथा ।

सदाज्ञाकरणम् ॥ ८ ॥

इति ॥ सदा सर्वकालमह्नि रात्रौ चेत्यर्थः । आज्ञाया गुरूपदिष्टार्थस्वरूपायाः करणम् ॥

तथा ।

विधिना प्रवृत्तिः ॥ ९ ॥

इति ॥ विधिना शास्त्रोक्तेन प्रवृत्तिः प्रत्युपेक्षणाप्रमार्जनाभिक्षाचर्यादिषु साधुसमाचारेषु व्यापारणम् ॥

तथा।

## आत्मानुग्रहचिन्तनम् ॥ १० ॥

इति ॥ क्वचिदर्थे गुर्वाज्ञायामात्मानुग्रहस्योपकारस्य चिन्तनं विमर्शनम्।

यथा।

धन्यस्योपरि निपतत्यहितसमाचरणधर्मनिर्वापी।
गुरुवदनमलयनिसृतो वचनरसः चन्दनस्पर्शः॥ १ ॥ इति।

तथा।

## व्रतपरिणामरक्षा ॥ ११ ॥

इति ॥ व्रतपरिणामस्य चारित्रलक्षणस्य तत्तदुपसर्गपरीषहादिषु स्वभावत एव व्रतबाधाविधायिषु सत्सु रक्षा चिन्तामणिमहौषध्यादिरक्षणोदाहरणेन परिपालना विधेया ॥

तथा।

## आरम्भत्यागः ॥ १२ ॥

इति ॥ आरम्भस्य षट्कायोपमर्दरूपस्य त्यागः।

एतदुपायमेवाह।

## पृथिव्याद्यसंघट्टनम् ॥ १३ ॥

इति ॥ पृथिव्यादीनां जीवनिकायानाम्। संघट्टनं स्पर्शनं तत्प्रतिषेधादसंघट्टनम्। उपलक्षणत्वादगाढगाढपरितापनापद्रावणानां च परिहार इति ॥

तथा ।

त्रिधेर्याशुद्धिः ॥ १४ ॥

इति ॥ त्रिधोर्ध्वाधस्तिर्यग्दिगपेक्षया । ईर्यायाश्चङ्क्रमणस्य शुद्धिर्युगमात्रादिदृष्टिनिवेशनरूपा ॥

तथा ।

भिक्षाभोजनम् ॥ १५ ॥

इति ॥ इह त्रिधा भिक्षा सर्वसंपत्करी पौरुषघ्नी वृत्तिभिक्षा चेति । तल्लक्षणं चेदम् ।

यतिर्ध्यानादियुक्तो यो गुर्वाज्ञायां व्यवस्थितः ।
सदानारम्भिणस्तस्य सर्वसंपत्करी मता ॥ १ ॥
वृद्धाद्यर्थमसङ्गस्य भ्रमरोपमयाटतः ।
गृहिदेहोपकाराय विहितेति शुभाशयात् ॥ २ ॥
प्रव्रज्यां प्रतिपन्नो यस्तद्विरोधेन वर्तते ।
असदारम्भिणस्तस्य पौरुषघ्नी प्रकीर्तिता ॥ ३ ॥
निःस्वान्धपङ्गवो ये तु न शक्ता वै क्रियान्तरे ।
भिक्षामटन्ति वृत्त्यर्थं वृत्तिभिक्षेयमुच्यते ॥ ४ ॥ इति ।

ततो भिक्षया प्रस्तावात्सर्वसंपत्करीलक्षणया पिण्डमुत्पाद्य भोजनं विधेयमिति ॥

तथा ।

आघाताद्यदृष्टिः ॥ १६ ॥

इति ॥ आघात्यन्ते हिंस्यन्ते जीवा अस्मिन्नित्याघातः

शूनादिस्थानम्। आदिशब्दाद् द्यूतखलाद्यशेषप्रमादस्थानग्रहः। तत आघातादेरदृष्टिरनवलोकनं कार्यं तदवलोकने घृणादिभवाभ्यस्ततया प्रमादानां तत्कौतुकात्कोपादिदोषप्रसङ्गादिति॥

तथा।

## तत्कथाश्रवणम्॥१७॥

इति। तेषामाघातादीनां कथायाः परैरपि कथ्यमानाया अश्रवणमनाकर्णनम्। तच्छ्रवणेऽपि दोषः प्राग्वत्॥

तथा।

## अरक्तद्विष्टता॥१८॥

इति॥ सर्वत्र प्रियकारिणि अरक्तेनारागवता तदितरस्मिंश्चाद्विष्टेनाद्वेषवता भाव्यम्। यतः पठ्यते।

रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम्॥ इति।

तथा।

## ग्लानादिप्रतिपत्तिः॥१९॥

इति॥ ग्लानो ज्वरादिरोगातुरः। आदिशब्दाद्बालवृद्धबहुश्रुतप्राघूर्णकादिग्रहः। तेषां प्रतिपत्तिः समुचितान्नपानादिसंपादनरूपं वैयावृत्त्यं महाफलत्वात्तस्य। पठ्यते च।

पडिभग्गस्स मयस्स व नासइ चरणं सुयं अगंणणाए।
नो वेयावच्चकयं सुहोदयं नासई कम्मं॥१॥

तथा ।

जह भमरमहुअरिगणा निवयन्ति कुसुमियंमि वणसण्डे ।
इय होइ निवइयव्वं गेलन्ने कइयवजढेणं ॥ २ ॥

तथा ।

## परोद्वेगाहेतुता ॥ २० ॥

इति ॥ परेषामात्मव्यतिरिक्तानां स्वपक्षगतानां परपक्षगतानां च गृहस्थपाषण्डिरूपाणामुद्वेगस्य प्रतीतरूपस्य हेतुता अहेतुभावः । यथोक्तम् ।

धम्मत्थमुज्जएणं सव्वस्सापत्तियं न कायव्वं ।
इय संजमो वि सेओ एत्थ य भयवं उदाहरणं ॥ १ ॥
सो तावसासमाओ तेसिं अप्पत्तियं मुणेऊणं ।
परमं अबोहिबीअं तओ गओ हन्त्यकाले वि ॥ २ ॥
इय अन्नेण वि सम्मं सक्कं अप्पत्तियं सइ जणस्स ।
नियमा परिहरियव्वं इयरम्मि सतत्तचिन्ताओ ॥ ३ ॥

इतरस्मिन्नशक्यप्रतीकारेऽप्रातीतिके स्वतत्त्वस्य स्वापराधरूपस्य चिन्ता कार्या । यथा ।

ममैवायं दोषो यदपरभवे नार्जितमहो
शुभं यस्माल्लोको भवति मयि कुप्रीतिहृदयः ।
अपापस्येदं मे कथमपरथा मत्सरमयं
जनो याति स्वार्थं प्रति विमुखतामेत्य सहसा ॥ १ ॥

एतदेवाह ।

भावतः प्रयत्नः ॥ २१ ॥

इति । भावतश्चित्तपरिणामलक्षणात्प्रयत्नः परोद्वेगाहेतुतायामुद्यमः कार्य इति । अयमत्र भावः । यदि कथंचित्तथाविधप्रघट्टकवैषम्यात्कायतो वचनतो वा न परोद्वेगाहेतुभावः परिहर्तुं पार्यते तदा भावतो रुचिलक्षणात् परोद्वेगं परिहर्तुं यत्नः कार्यः भावस्यैव फलं प्रति अबन्ध्यहेतुत्वात् । उक्तं च ।

अभिसंधेः फलं भिन्नमनुष्ठाने समेऽपि हि ।
परमोऽतः स एवेह वारीव कृषिकर्मणि ॥ १ ॥ इति ।

तथा ।

अशक्ये बहिश्चारः ॥ २२ ॥

इति ॥ अशक्ये कुतो वैगुण्यात्समाचरितुमपार्यमाणे तपोविशेषादौ क्वचिदनुष्ठाने बहिश्चारो बहिर्भावलक्षणः तस्मात्कार्यः । अशक्यं नारब्धव्यमित्यर्थः अशक्यारम्भस्य क्लेशैकफलत्वेन साध्यसिद्धेरनङ्गत्वात् ॥

तथा ।

अस्थानाभाषणम् ॥ २३ ॥

इति ॥ अस्थाने भावितोपयोगायोग्यत्वेनाप्रस्तावेऽभाषणं कस्यचित्कार्यस्याभणनम् । एवमेव साधोर्भाषासमितत्वसद्धिः स्यादिति ॥

तथा ।

स्खलितप्रतिपत्तिः ॥ २४ ॥

इति ॥ कुतोऽपि तथाविधप्रमाददोषात्स्खलितस्य किंचिन्मूलगुणादावाचारविशेषे स्खलनस्य विराधनालक्षणस्य जातस्य प्रतिपत्तिः स्वतः परेण वा प्रेरितस्य सतोऽभ्युपगमस्तथोदितप्रायश्चित्ताङ्गीकारेण कार्यः स्खलितकाले दोषादनन्तगुणत्वेन दारुणपरिणामत्वात्तदप्रतिपत्तेः । अत एवोक्तम् ।

उप्पन्ना उप्पन्ना माया अणुमग्गओ निहन्तव्वा ।
आलोयणनिन्दणगरहणाहिं न पुणो विधीयन्ति ॥
अणागारं परं कम्म नेव गूहे न निण्हवे ।
सुई सया वियडभावे असंसत्ते जिइन्दिए ॥

तथा ।

पारुष्यपरित्यागः ॥ २५ ॥

इति ॥ पारुष्यस्य तीव्रकोपकषायोदयविशेषात्परुषभावलक्षणस्य तथाविधभाषणादेः स्वपक्षपरपक्षाभ्यामसंबन्धयोग्यताहेतोः परित्यागः कार्यः अपारुष्यरूपविश्वासमूलत्वात्सर्वसिद्धीनाम् । यदुच्यते ।

सिद्धेर्विश्वासिता मूलं यद् यूथपतयो गजाः ।
सिंहो मृगाधिपत्येऽपि न मृगैरनुगम्यते ॥ १ ॥ इति

तथा ।

सर्वत्रापिशुनता ॥ २६ ॥

इति ॥ सर्वत्र स्वपक्षे परपक्षे च पराच्च दोषाणामनाविष्करणं परदोषग्राहितायां ह्यात्मैव दोषवान् कृतः स्यात् । पठ्यते च ।

लोश्रो परस्स दोसे हत्थाहत्थिं गुणे य गिण्हन्तो ।
अप्पाणमप्पणच्चिय कुणइ सदोसं च सगुणं च ॥ १ ॥

तथा ।

## विकथावर्जनम् ॥ २७ ॥

इति ॥ विकथानां स्त्रीभक्तदेशराजगोचराणां स्वभावत एवाकुशलाशयसमुन्मीलननिबन्धनानां वर्जनम् । एतत्कथाकरणे हि कृष्णनीलाद्युपाधिरिव स्फटिकमणिरात्मा कथ्यमानस्त्र्यादिचेष्टानामनुरूपतां प्रतिपद्यते ॥

तथा ।

## उपयोगप्रधानता ॥ २८ ॥

इति ॥ उपयोगः प्रधानं पुरःसरं सर्वकार्येषु यस्य स तथा तस्य भावस्तत्ता विधेया निरुपयोगानुष्ठानस्य द्रव्यानुष्ठानत्वात् अनुपयोगो द्रव्यम् इति वचनात् ।

तथा ।

## निश्चितहितोक्तिः ॥ २९ ॥

इति ॥ निश्चितस्य संशयविपर्ययानध्यवसायबाधदोषपरिहारेण निर्णीतस्य हितस्य च परिणामसुन्दरस्योक्तिर्भाषणम् । अत एव पठ्यते ।

कुदृष्टं कुश्रुतं चैव कुज्ञातं कुपरीक्षितम् ।
कुभावजनकं[1] सन्तो भाषन्ते न[2] कदाचन ॥

प्रतिपन्नानुपेक्षा ॥ ३० ॥

इति ॥ प्रतिपन्नस्याभ्युपगतस्य गुरुविनयस्वाध्यायादेः साधुसमाचारविशेषस्यानुपेक्षानवधीरणा । अवधीरितो हि समाचारो जन्मान्तरेऽपि दुर्लभः स्यात् ॥

तथा ।

असत्प्रलापाश्रुतिः ॥ ३१ ॥

इति ॥ असतां खलप्रकृतीनां प्रलापा अनर्थकवचनरूपा असत्प्रलापाः । तेषामश्रुतिरनवधारणं श्रुतिकार्यद्वेषाकरणेनानुग्रहचिन्तनेन च । यथोक्तम् ।

निराकरिष्णुर्यदि नोपलभ्यते
भविष्यति क्षान्तिरनाश्रया कथम् ।
यदाश्रयात्क्षान्तिफलं मयाप्यते
स सत्कृतिं कर्म च नाम नार्हति ॥ १ ॥

तथा ।

अभिनिवेशत्यागः ॥ ३२ ॥

इति ॥ अभिनिवेशस्य मिथ्याग्रहरूपतयाप्रज्ञापनीयतामूलबीजस्य सर्वकार्येषु त्याग इति ॥

---

१ BC °जनितं । २ C न भाषन्ते ।

तथा।

अनुचिताग्रहणम् ॥ ३२ ॥

इति ॥ अनुचितस्य साधुजनाचारबाधाविधायितया अयोग्यस्याशुद्धपिण्डशय्यावस्त्रादेर्धर्मोपकरणस्य बालवृद्धनपुंसकादेश्चाप्रव्राजनीयस्याग्रहणमनुपादानं कार्यमिति। यथोक्तम्।

पिण्डं सिज्जं च वत्थं च चउत्थं पायमेव च।
अकप्पियं न इच्छिज्जा पडिगाहिज्ज कप्पियं ॥ १ ॥
अट्ठारस पुरिसेसुं वीसं इत्थीसु दस नपुंसेसु।
पव्वावणा अणरिहा पन्नत्ता वीयरागेहिं ॥ २ ॥

ते चामी।

बाले वुड्ढे नपुंसे य कीवे जड्डे य वाइए।
तेणे रायावगारी य उम्मत्ते य अदंसणे ॥
दासे दुट्ठे य मूढे य अणत्ते जुंगिए इय।
उबद्धए य भयगे सेहनिप्फेडिए इय ॥
गुव्विणी बालवच्छा य पव्वावेउं न कप्पएत्ति।

तथा।

पण्डए वाइए कीवे कुम्भी ईसालुयत्तिय।
सउणी तक्कम्मसेवी य पक्खियापक्खिए इय ॥
सोगन्धिए य आसत्ते एए दस नपुंसगा।
संकिलट्ठत्ति साहूणं पव्वावेउं अकप्पिया[1] ॥

एतत्स्वरूपं च निशीथाध्ययनाज्ज्ञातव्यम् ॥

---

१. MSS. read पण्डे कीए वाइय कुम्भी ईसालु सउणी य तक्कंमसेविपक्खियमपक्खिए तह सुगंधि आसित्ते।

उचितेऽनुज्ञापना ॥ ३४ ॥

इति ॥ उचितेऽनुचितविलक्षणे पिण्डादौ । अनुज्ञापनानुजानतोऽनुमन्यमानस्य स्वयमेव गुरोर्द्रव्यस्वामिनो वा प्रयोजनम् । यथा अनुजानीत यूयं मम ग्रहीतुमेतत् इति अन्यथादत्तादानप्रसङ्गात् ॥

ततः[१] ।

निमित्तोपयोगः ॥ ३५ ॥

इति ॥ निमित्ते उचिताहारादेर्ग्रहीतुमभिलषितस्य शुद्ध्यशुद्धिसूचके शकुने[२] साधुजनप्रसिद्धे । प्रवृत्ते सतीति गम्यते । उपयोगः आभोगः कार्यः । अत्र च निमित्ताशुद्धौ चैत्यवन्दनादिकुशलक्रियापूर्वकं निमित्तान्तरमन्वेषणीयम् । एवं यदि त्रीन्वारान्निमित्तशुद्धिर्न स्यात् तदा तद्दिने न तेन किंचिद्ग्राह्यं यदि परमन्यानीतं भोक्तव्यमिति ॥

निमित्तशुद्धावपि ।

अयोग्येऽग्रहणम् ॥ ३६ ॥

इति ॥ अयोग्ये उपकाराकारकत्वेनानुचिते पिण्डादावग्रहणमनुपादानं कार्यमिति ॥

तथा ।

अन्ययोग्यस्य ग्रहः ॥ ३७ ॥

---

१ P adds तथा । २ A B D add उपयोगकरणे ।

इति ॥ अन्यस्यात्मव्यतिरिक्तस्य गुरुग्लानबालादेर्यद् योग्यमुपष्टम्भकत्वेनोचितं तस्य ग्रहो विधेय इति ॥

एवं च गृहीतस्य किं कार्यमित्याह ।

## गुरोर्निवेदनम् ॥ ३८ ॥

इति ॥ हस्तगतादृहिर्गृहीतस्येर्याप्रतिक्रमणगमनागमनालोचनापूर्वकं हस्तगतमध्ये लेवमेव गुरोर्निवेदनं दायकहस्तमात्रव्यापारप्रकाशनेन लब्धस्य ज्ञापनं समर्पणं च कार्यमिति ॥

अत एव ।

## स्वयमदानम् ॥ ३९ ॥

इति ॥ स्वयमात्मनादानं लब्धस्यान्यस्मा अवितरणं गुर्वायत्तीकृतत्वात्तस्य । ततो यदि गुरुः स्वयमेव कस्मैचिद्बालादिकाय किंचिद्दद्यात् तत्सुन्दरमेव । अथ कुतोऽपि व्यग्रतया न स्वयं ददाति किं तु तेनैव दापयति तदा

## तदाज्ञया प्रवृत्तिः ॥ ४० ॥

इति ॥ तस्य गुरोराज्ञया नियोगेन प्रवृत्तिर्दाने कार्या ॥

तत्र च ।

## उचितच्छन्दनम् ॥ ४१ ॥

इति ॥ उचितस्य समानसंभोगयादेः साधोः । न पुनरन्यस्य तं प्रति दानानधिकारित्वात्तस्य । छन्दनं छन्दस्याभिलाषस्याशनादिग्रहणं प्रत्युत्पादनं कार्यम् ॥

ततो दत्तावशिष्टस्यान्नादेः

धर्मायोपभोगः ॥ ४२ ॥

इति । धर्माय धर्माधारशरीरसंधारणद्वारेण धर्मार्थमेव च । न पुनः शरीरवर्णबलाद्यर्थमपि । उपभोग उपजीवनम् । तथा चार्षम् ।

वेयणवेयावच्चे इरियट्ठाए य संजमट्ठाए ।
तह पाणवत्तियाए छट्ठं पुण धम्मचिन्ताए ॥ १ ॥

तथा ।

विविक्तवसतिसेवा ॥ ४३ ॥

इति । विविक्तायाः स्त्रीपशुपण्डकविवर्जिताया वसतेराश्रयस्य सेवा परिभोगो विधेयः । अविविक्तायां हि वसतौ यतिनां ब्रह्मचर्यव्रतविलोपप्रसङ्ग इति । अत एव ब्रह्मचर्यव्रतपरिपालनायैतच्छेषगुप्तीरभिधातुं स्त्रीकथापरिहारः इत्यादि विभूषापरिवर्जनम् इतिपर्यन्तं सूत्राष्टकमाह ।

तत्र ।

स्त्रीकथापरिहारः ॥ ४४ ॥

इति ॥ स्त्रीणां कथा स्त्रीकथा । सा च चतुर्विधा जातिकुलरूपनेपथ्यभेदात् । तत्र जातिर्ब्राह्मणादिका[१] तत्कथा ।

---

१ B C omit the whole sentence.

यथा।

धिग् ब्राह्मणीर्धवाभावे या जीवन्ति मृता इव।
धन्याः शूद्रीर्जनैर्मान्याः पतिलक्षेऽप्यनिन्दिताः॥ १॥

कुलं चौलुक्यवङ्कमानादि। तत्कथा।

अहो चौलुक्यपुत्रीणां साहसं जगतोऽधिकम्।
विशन्त्यग्नौ मृते पत्यौ याः प्रेमरहिता अपि॥ २॥

रूपं शरीराकारः। तत्कथा।

अहो अन्ध्रपुरन्ध्रीणां रूपं जगति वर्ण्यते।
यत्र यूनां दृशो लग्ना न मन्यन्ते परिश्रमम्॥ ३॥

नेपथ्यं वस्त्रादिवेषग्रहः। तत्कथा।

धिङ्नारीरौदीच्या बहुवस्त्राच्छादिताङ्गलतिकत्वात्।
यद्यौवनं न यूनां चक्षुर्मोदाय भवति सदा॥ ४॥

तस्याः स्त्रीकथायाः परिहार इति॥

## निषद्यानुपवेशनम्॥ ४५॥

इति॥ निषद्यायां स्त्रीनिवेशस्थाने पट्टपीठादौ मुहूर्तं यावत्स्त्रीषूत्थितास्वप्यनुपवेशनं कार्यं सद्यैव स्त्रीनिषद्योपवेशने साधोस्तच्छरीरसंयोगसंक्रान्तोष्णस्पर्शवशेन मनोविस्रोतसिका-दोषसंभवात्॥

## इन्द्रियाप्रयोगः॥ ४६॥

इति॥ इन्द्रियाणां चक्षुरादीनां कथंचिद्विषयभावापन्नेष्वपि गुह्योरुवदनकक्षास्तनादिषु स्त्रीशरीरावयवेष्वप्रयोगोऽव्यापारणं कार्यं पुनस्तन्निरीक्षणाद्यर्थं न यत्नः कार्यः॥

## कुड्यान्तरदाम्पत्यवर्जनम् ॥ ४७ ॥

इति ॥ कुड्यं भित्तिः तदन्तरं व्यवधानं यस्य तत्तथा। दाम्पत्यं दयितापतिलक्षणं युगलम्। कुड्यान्तरं च तद्दाम्पत्यं चेति समासः। तस्य वर्जनं वसतौ स्वाध्यायध्यानादौ च न तत्र स्थातव्यं यत्र कुड्यान्तरं दाम्पत्यं भवतीति ॥

## पूर्वक्रीडितास्मृतिः ॥ ४८ ॥

इति ॥ पूर्वं प्रव्रज्याप्रतिपत्तिकालात्प्राक् क्रीडितानां प्रौढ-प्रमोदप्रद्य्मदाप्रसङ्गप्रभृतिविलसितानामस्मृतिरस्मरणम्। अयं च भुक्तभोगान् प्रत्युपदेश इति ॥

## प्रणीताभोजनम् ॥ ४९ ॥

इति ॥ प्रणीतस्यातिस्निग्धस्य गलत्स्नेहबिन्दुलक्षणस्या-हारस्याभोजनमनुपजीवनमिति ॥

## अतिमात्राभोगः ॥ ५० ॥

इति ॥ अप्रणीतस्याप्याहारस्यातिमात्रस्य द्वात्रिंशत्कवलादि-शास्त्रसिद्धप्रमाणातिक्रान्तस्याभोगोऽभोजनम् ॥

## विभूषापरिवर्जनम् ॥ ५१ ॥

इति ॥ विभूषायाः शरीरोपकरणयोः शृङ्गारलक्षणायाः परिवर्जनमिति। एतेषां च स्त्रीकथादीनां नवानामपि भावानां मोहोद्रेकहेतुत्वान्निषेधः कृत इति ॥

तथा ।

तत्त्वाभिनिवेशः ॥ ५२ ॥

इति ॥ तत्त्वे सम्यग्दर्शनज्ञानचारित्रानुसारिणि क्रियाकलापेऽभिनिवेशः शक्यकोटिमागते कर्तुमत्यन्तादरपरता । अन्यथा तु मनःप्रतिबन्ध एव कार्यः ॥

तथा ।

युक्तोपधिधारणा ॥ ५३ ॥

इति ॥ युक्तस्य शास्त्रप्रसिद्धप्रमाणसमन्वितस्य लोकपरिवादाविषयस्य स्वपरयो रागानुत्पादकस्योपधेर्वस्त्रपात्रादिलक्षणस्य धारणोपभोगः । उपलक्षणत्वात्परिभोगश्च गृह्यते । यथोक्तम् ।

धारणया उवभोगो परिहरणा होइ परिभोगो ॥

तथा ।

मूर्च्छात्यागः ॥ ५४ ॥

इति ॥ मूर्च्छाया अभिष्वङ्गस्य सर्वत्र बाह्येऽर्थेऽभ्यन्तरे च शरीरबलादौ वर्जनम् ॥

तथा ।

अप्रतिबद्धविहरणम् ॥ ५५ ॥

इति ॥ अप्रतिबद्धेन देशग्रामकुलादावमूर्च्छितेन विहरणं विहारः कार्यः ॥

तथा।

परकृतबिलवासः ॥ ५६ ॥

इति ॥ परैरात्मव्यतिरिक्तैः कृते स्वार्थमेव निष्पादिते बिल इव बिलेऽसंस्करणीयतयोपाश्रये वासः ॥

तथा।

अवग्रहशुद्धिः ॥ ५७ ॥

इति ॥ अवग्रहाणां देवेन्द्रराजगृहपतिशय्यातरसाधर्मिकाभाव्यभूभागलक्षणानां शुद्धिस्तदनुज्ञया परिभोगलक्षणा कार्या ॥

तथा।

मासादिकल्पः ॥ ५८ ॥

इति ॥ मासः प्रतीतरूप एव। आदिशब्दाच्चतुर्मासी गृह्यते। ततो मासकल्पश्चतुर्मासीकल्पश्च कार्यः ॥

यदा तु दुर्भिक्षक्षितिपतिविग्रहजङ्घाबलक्षयादिभिर्निमित्तैः क्षेत्रविभागेन मासादिकल्पः कर्तुं न पार्यते तदा किं कर्तव्यमित्याह।

एकत्रैव[1] तत्क्रिया ॥ ५९ ॥

इति॥ एकस्मिन्नेव मासकल्पादियोग्यक्षेत्रे वसत्यन्तरविभागेन वीथ्यन्तरविभागेन च सर्वथा निरवकाशतायां संस्तारकभूमिपरिवर्तन तत्क्रिया मासादिकल्पक्रियेति। अत एव पठ्यते।

संथारपरावत्तं अभिग्गहं चेव चित्तरूवं तु।
एत्तो चरित्तिणो इह विहारपडिमाइसुं करेन्ति ॥ १ ॥

---

१ D adds क्षेत्रे।

तत्र च ।

सर्वत्राममत्वम् ॥ ६० ॥

इति ॥ सर्वत्र पीठफलकादौ नित्यवासोपयोगिन्यन्यस्मिंश्चाममत्वमममीकार इति ॥

तथा ।

निदानपरिहारः ॥ ६१ ॥

इति ॥ नितरां दीयते लूयते सम्यग्दर्शनप्रपञ्चबद्धलमूलजालो ज्ञानादिविषयविशुद्धविनयविधिसमुद्धुरस्कन्धो विहितावदानदानादिभेदशाखोपशाखाखचितो निरतिशयसुरनरभवप्रभवसुखसंपत्तिप्रसूनाकीर्णोऽनभ्यर्णीकृतनिखिलव्यसनव्याकुलशिवालयशर्मफलोल्बणो धर्मकल्पतरुरनेन सुरर्द्ध्याद्याशंसनपरिणामपरशुनेति निदानं तस्य परिहारः अत्यन्तदारुणपरिणामत्वात्तस्य । यथोक्तम् ।

यः पालयित्वा चरणं विशुद्धं
करोति भोगादिनिदानमज्ञः ।
स वर्धयित्वा फलदानदक्षं
स नन्दनं भस्मयते वराकः ॥ १ ॥ इति

तर्हि किं कर्तव्यमित्याह ।

विहितमिति·प्रवृत्तिः ॥ ६२ ॥

इति ॥ विहितं कर्तव्यतया भगवता निरूपितमेतदित्येवं सर्वत्र धर्मकार्ये प्रवृत्तिः ॥

तथा ।

विधिना स्वाध्याययोगः ॥ ६३ ॥

इति ॥ विधिना कालविनयाद्याराधनरूपेण स्वाध्यायस्य वाचनादेर्योगो व्यापारणमिति ॥

तथा ।

आवश्यकापरिहाणिः ॥ ६४ ॥

इति ॥ आवश्यकानां स्वकाले नियमात्कर्तव्यविशेषाणां प्रत्युपेक्षणादीनामपरिहाणिरभ्रंशः । इदं च प्रधानं साधुलिङ्गम् । तथा च दशवैकालिकनिर्युक्तिः ।

संवेगो निव्वेओ विसयविवेगो सुसीलसंसग्गी ।
आराहणा तवो नाणदंसणचरित्तविणओ य ॥ १ ॥
खन्ती य मद्दवज्जव विमुत्तयादीणया तितिक्खा य ।
आवस्सगपरिसुद्धी य भिक्खुलिङ्गाइं एयाइं ॥२॥ इति ॥

तथा ।

यथाशक्ति तपःसेवनम् ॥ ६५ ॥

यथाशक्ति तपसोऽनशनादेः सेवनमाचरणम् । यथोक्तम् ।

कायो न केवलमयं परितापनीयो
ऽभीष्टै रसैर्बहुविधैर्न च लालनीयः ।
चित्तेन्द्रियाणि न चरन्ति यथोत्पथेन
वश्यानि येन च तदाचरितं जिनानाम् ॥ १ ॥

इति ॥

तथा ।

## परानुग्रहक्रिया ॥ ६६ ॥

परेषां स्वपक्षगतानां परपक्षगतानां च जन्तूनां महत्या करुणापरायणपरिणामितयानुग्रहकरणं ज्ञानाद्युपकारसंपादनमिति ॥

तथा ।

## गुणदोषनिरूपणम् ॥ ६७ ॥

इति ॥ सर्वत्र विहारादौ कर्तव्ये गुणदोषयोर्निरूपणं कार्यम् ।

ततः ।

## बहुगुणे प्रवृत्तिः ॥ ६८ ॥

इति ॥ यद्बहुगुणं उपलक्षणात्केवलगुणमयं वा कार्यमाभासते तत्र प्रवर्तितव्यं नान्यथेति ॥

तथा ।

## क्षान्तिर्मार्दवमार्जवमलोभता ॥ ६९ ॥

इति ॥ एते क्षान्त्यादयश्चत्वारोऽपि कषायचतुष्टयप्रतिपक्षभूताः साधुधर्ममूलभूमिकास्वरूपा नित्यं कार्या इति ॥

अत एव ।

## क्रोधाद्यनुदयः ॥ ७० ॥

इति ॥ क्रोधादीनां चतुर्णां कषायाणामनुदयो मूलत एवानुत्थानम् ॥

तथा ।

वैफल्यकरणम् ॥ ७१ ॥

इति ॥ वैफल्यस्य[१] विफलभावस्य कथंचिदुदयप्राप्तानामपि क्रोधादीनां करणम् । क्रोधादीनामुदये यच्चिन्तितं कार्यं तस्याकरणेन क्रोधाद्युदयो निष्फलः कार्य इति भावः । एवं च कृते पूर्वोक्ताः चान्त्यादय आसेविता भवन्ति ॥

क्रोधाद्यनुदयार्थिना च यत्कार्यं तदाह ।

विपाकचिन्ता ॥ ७२ ॥

इति ॥ विपाकस्य क्रोधादिकषायफलस्य चिन्ता विमर्शो विधेयः । यथा ।

क्रोधात्प्रीतिविनाशं मानाद्विनयोपघातमाप्नोति ।

शाठ्यात्प्रत्ययहानिं सर्वगुणविनाशनं लोभात् ॥ १ ॥ इति ।

तथा ।

धर्मोत्तरो योगः ॥ ७३ ॥

इति ॥ धर्मोत्तरो धर्मफलः सर्व एव योगो व्यापारो विधेयः । न पुनरट्टाट्टहासकेलिकिलत्वादिः पापफल इति ॥

तथा ।

आत्मानुप्रेक्षा ॥ ७४ ॥

इति ॥ आत्मनः स्वस्यानुप्रेक्षा पर्यालोचना भावप्रत्युपेक्षारूपा ।

---

१ C omits from here down to यत्कार्यं.

यथा ।

किं कयं किं वा सेसं किं करणिज्जं तवं च न करेमि ।
पुव्वावरत्तकाले जागरओ भावपडिलेहत्ति ॥ १ ॥

एवमात्मन्यनुप्रेक्षिते यत्कृत्यं तदाह ।

उचितप्रतिपत्तिः ॥ ७५ ॥

इति ॥ उचितस्य गुणबृंहकस्य प्रमादनिग्राहिणश्चानुष्ठानस्य प्रतिपत्तिरभ्युपगम इति ॥

तथा ।

प्रतिपक्षासेवनम् ॥ ७६ ॥

इति ॥ यो हि यदा येन दोषेण बाध्यमानो भवति तेन तदा तत्प्रतिपक्षभूतस्य गुणस्यासेवनं कार्यं हिमपातपीडितेनेवाग्नेरिति ॥

तथा ।

आज्ञानुस्मृतिः ॥ ७७ ॥

इति ॥ आज्ञाया भगवद्वचनस्य पदे पदे हृदयेऽनुस्मृतिः कार्या भगवद्वचनानुस्मरणस्य भगवत्स्मरणरूपत्वेन महागुणत्वात् ।

यदुक्तम् ।

अस्मिन्हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनीन्द्र इति ।
हृदयस्थिते च तस्मिन्नियमात्सर्वार्थसंसिद्धिः ॥ १ ॥

इति ।

तथा ।

समशत्रुमित्रता ॥ ७८ ॥

इति ॥ शत्रौ मित्रे च समानपरिणामता । एको हि तत्र निर्भर्त्सनादिभिरन्यस्तु स्तुतिवन्दनादिभिः स्वचित्तसंतोषं घटयन्तौ मां निमित्तमात्रमवलम्ब्य प्रवृत्तौ द्वावपि । न तु मत्कार्यं किंचनेति । ततः कोऽनयोरूनोऽधिको वा मम इति भावनया ॥

तथा ।

परीषहजयः ॥ ७९ ॥

इति ॥ परीषहाणां क्षुत्पिपासादीनां द्वाविंशतेरपि जयोऽभिभवः । तत्र दर्शनपरीषहस्य मार्गाच्यवनार्थं शेषाणां च कर्मनिर्जरार्थं कार्य इति । यथोक्तं मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहा इति ॥

तथा ।

उपसर्गातिसहनम् ॥ ८० ॥

इति ॥ उपसृज्यन्ते पीडापरिगतैर्विधीयन्ते ये त उपसर्गाः । ते च दिव्यमानुषतैरश्चात्मसंवेदनीयभेदाच्चतुर्धा । तेषामतिसहनमभिभवनम् । अन्यथा व्यसनमयत्नेन संसारस्य तेषामनतिसहने मूढमतित्वप्रसङ्गात् । यथोक्तम् ।

संसारवर्त्यपि समुद्विजते विपद्भ्यो
यो नाम मूढमनसां प्रथमः स नूनम् ।
अम्भोनिधौ निपतितेन शरीरभाजा
संसृज्यतां किमपरं सलिलं विहाय ॥ १ ॥ इति ॥

तथा ।

सर्वथा भयत्यागः[१] ॥ ८१ ॥

इति ॥ सर्वथा सर्वैः प्रकारैरिहलोकपरलोकभयादिभिर्भयस्य भीतेस्त्यागः परिहारः। निरतिचारयतिसमाचारवशोपलब्धसमुत्कृष्टोपष्टम्भतया मृत्योरपि नोद्विजितव्यं किं पुनरन्यभयस्थानेभ्य इति। अत एवोक्तमन्यच ।

प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥ १ ॥

तथा ।

तुल्याश्मकाञ्चनता ॥ ८२ ॥

इति ॥ तुल्ये समाने अभिष्वङ्गाविषयतयाश्मकाञ्चने उपलसुवर्णे यस्य स तथा तद्भावस्तत्ता ॥

तथा ।

अभिग्रहग्रहणम् ॥ ८३ ॥

इति ॥ अभिग्रहाणां द्रव्यक्षेत्रकालभावभेदभिन्नानां

लेवडमलेवडं वा अमुगं दव्वं च अज्ज घेच्छामि।
अमुगेण व दव्वेण व अह दव्वाभिग्गहो एस ॥ १ ॥

इत्यादिशास्त्रसिद्धानां ग्रहणमभ्युपगमः कार्यः ॥

तथा ।

विधिवत्पालनम् ॥ ८४ ॥

इति ॥ विधिवद्विधियुक्तं यथा भवति पालनमभिग्रहाणामिति ॥

---

१ B. omits the sūtra.

तथा ।

## यथार्हं ध्यानयोगः ॥ ८५ ॥

इति ॥ यथार्हं यो यस्य योग्यस्तदनतिक्रमेण ध्यानयोगो ध्यानयोर्धर्म्यशुक्ललक्षणयोर्योगः । अथवा यथार्हमिति यो देशः कालो वा ध्यानस्य योग्यस्तदनुलङ्घनेनेति ॥

तथा ।

## अन्ते संलेखना ॥ ८६ ॥

इति ॥ अन्त आयुःपर्यन्ते विज्ञाते सति संलेखना शरीरकषाययोस्तपोविशेषभावनाभ्यां कृशीकरणम् ॥

परमत्र ।

## संहननाद्यपेक्षणम् ॥ ८७ ॥

इति ॥ संहननस्य शरीरसामर्थ्यलक्षणस्य आदिशब्दाच्चित्तवृत्तेः सहायसंपत्तेश्च । अपेक्षणमाश्रयणं कार्यं संहननाद्यपेक्ष्य संलेखना विधेयेति भावः ॥

नन्वनयोर्द्रव्यसंलेखनाभावसंलेखनयोः कात्यन्तमादरणीयेत्याह ।

## भावसंलेखनायां यत्नः ॥ ८८ ॥

इति ॥ भावसंलेखनायां कषायेन्द्रियविकारतुच्छीकरणरूपायां यत्न आदरः कार्यः द्रव्यसंलेखनाया अपि भावसंलेखनार्थमुपदेशात् । अयमत्र भावः । इह मुमुक्षुणा भिक्षुणा प्रत्यहं मरणकालपरिज्ञानयत्नपरेण स्थेयम् । मरण-

कालपरिज्ञानोपायाश्चागमदेवतावचनस्वप्रतिभातथाविधानिष्ट-स्वप्नदर्शनादयोऽनेके। ते शास्त्रलोकप्रसिद्धा इति। ततो विज्ञाते मरणकाले पूर्वमेव द्वादशवर्षाणि यावदुत्सर्गतः संलेखना कार्या।

तत्र च।

चत्तारि विचित्ताइं विगईनिज्जूहियाइं चत्तारि।
संवच्छरे य दोन्नि उ एगंतरियं च आयामं॥
नाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं।
अन्ने वि य छम्मासे होइ विगिट्ठं तवोकम्मं॥
वासं कोडीसहियं आयामं काउमाणुपुव्वीए।
गिरिकन्दरं तु गन्तुं पायवगमणं अह करेइ॥

यदा तु कुतोऽपि संहननादिवैगुण्यान्न शक्यत इयान् संलेखनाकालः साधयितुं तदा मासवर्षपरिहाण्या जघन्यतोऽपि षण्मासान् यावत्संलेखना कार्या। असंलिखितशरीरकषायो हि भिचुरनशनमधिष्ठितः सहसा धातुचये समुपस्थिते न सुगतिफलं तथाविधं समाधिमाराधयितुं साधीयान्स्यादिति॥

ततः।

## विशुद्धं ब्रह्मचर्यम्॥ ८९॥

इति॥ विशेषेणातिनिविडब्रह्मचर्यगुप्तिविधानरूपेण शुद्धं ब्रह्मचर्यं प्रतीतमेव विधेयम्। यदत्र संलेखनाधिकारे विशुद्ध-ब्रह्मचर्योपदेशनं तद्वेदोदयस्य चीणशरीरतायामप्यत्यन्तदुर्धरत्व-ख्यापनार्थमिति॥

अथ संलेखनानन्तरमाशुघातके वा विषविशूचिकादौ दोषे सति यद्विधेयं तदाह ।

विधिना देहत्याग इति ॥ ९० ॥

इति ॥ विधिनालोचनव्रतोच्चारपरक्षामणानशनशुभभावनापञ्चपरमेष्ठिस्मरणलक्षणेन देहस्य त्यागः परित्यजनं पण्डितमरणाराधनमित्यर्थः । इतिशब्दः परिसमाप्तौ । इत्युक्तः सापेक्षयतिधर्मः ॥

अथ द्वितीयधर्मप्रस्तावनायाह ।

निरपेक्षयतिधर्मस्तु ॥ ९१ ॥

इति ॥ निरपेक्षयतीनां धर्मः पुनरयं वक्ष्यमाणः ॥

तमेवाह ।

वचनगुरुता ॥ ९२ ॥

इति ॥ वचनमेवागम एव गुरुः सर्वप्रवृत्तौ निवृत्तौ चोपदेशकत्वेन यस्य स तथा तद्भावस्तत्ता ॥

तथा ।

अल्पोपधित्वम् ॥ ९३ ॥

इति ॥ अल्पः स्थविरापेक्षयोपधिर्वस्त्रपात्रादिरूपो यस्य स तथा तद्भावस्तत्त्वम् । उपधिप्रमाणं च विशेषशास्त्रादवसेयम् ॥

तथा ।

निःप्रतिकर्मशरीरता ॥ ९४ ॥

इति ॥ निःप्रतिकर्म तथाविधग्लानाद्यवस्थायामपि प्रतिकाररहितं शरीरं यस्य स तथा तद्भावस्तत्त्वम् ॥

अत एव।

अपवादत्यागः॥ ९५॥

इति॥ अपवादस्योत्सर्गापेक्षयापकृष्टवादस्य त्यागः कार्यः। न हि निरपेक्षो यतिः सापेक्षयतिरिवोत्सर्गासिद्धावपवादमपि समालम्ब्याल्पदोषं बहुगुणं च कार्यमारभते किं तूत्सर्गपथप्राप्तं केवलगुणमयमेवेति॥

तथा।

ग्रामैकरात्रादिविहरणम्॥ ९६॥

इति॥ ग्रामे प्रतीतरूपे उपलक्षणत्वान्नगरादौ च एका वासो रात्रिर्यस्मिन्सैकरात्रः। आदिशब्दाद्द्विरात्रस्य मासकल्पस्य च ग्रहः। तेन विहरणम्। किमुक्तं भवति। यदा प्रतिमाकल्परूपो निरपेक्षो यतिधर्मः प्रतिपन्नो भवति तदार्तुबद्धे काले ग्रामे ज्ञातः सन् स एकरात्रम् अज्ञातस्त्वेकरात्रं द्विरात्रं वा वसति। यथोक्तम्।

नाएगरायवासी एगं च दुगं च अन्नाए॥

जिनकल्पिकयथालन्दकल्पिकशुद्धपरिहारिका ज्ञाता अज्ञाताश्च मासमिति॥

तथा।

नियतकालचारिता॥ ९७॥

इति॥ नियते तृतीयपौरुषीलक्षणे काले भिक्षार्थं संचरणम्। यथोक्तम्। भिक्खापन्थो य तइयाए त्ति॥

तथा ।

प्राय ऊर्ध्वस्थानम् ॥ ९८ ॥

इति ॥ प्रायो बाहुल्येनोर्ध्वस्थानं कायोत्सर्गः ॥

तथा ।

देशनायामप्रबन्धः ॥ ९९ ॥

इति ॥ देशनायां धर्मकथारूपायां धर्मं श्रोतुमुपस्थितेष्वपि तथाविधप्राणिष्वप्रबन्धोऽभूरिभावः एगवयणं दुवयणं च इति वचनप्रामाण्यात् ॥

तथा ।

सदाप्रमत्तता ॥ १०० ॥

इति ॥ सदा दिवा रात्रौ चाप्रमत्तता निद्रादिप्रमादपरिहारः ॥

तथा ।

ध्यानैकतानत्वमिति ॥ १०१ ॥

इति ॥ ध्याने धर्मध्यानादावेक एव तानश्चित्तप्रसर्पणरूपो यस्य स तथा तद्भावस्तत्त्वम् । इतिशब्दः समाप्तौ ॥

अथोपसंजिहीर्षुराह ।

सम्यग्यतित्वमाराध्य महात्मानो यथोदितम् ।
संप्राप्नुवन्ति कल्याणमिह लोके परत्र च ॥ १०२ ॥

इति ॥ सम्यग्यतित्वमुक्तरूपमाराध्य समासेव्य महात्मानो

जना यथोदितं यथा शास्त्रे निरूपितम् । किमित्याह संप्राप्नुवन्ति लभन्ते कल्याणं भद्रम् । क्वेत्याह इह लोके परत्र च इति प्रतीतरूपमेव ॥

एतदेव विवरीषुराह ।

क्षीरास्रवादिलब्ध्योघमासाद्य परमाक्षयम् ।
कुर्वन्ति भव्यसत्त्वानामुपकारमनुत्तमम् ॥ १०३ ॥

इति ॥ क्षीरं दुग्धं श्रोतृजनकर्णपुटेष्वास्रवति क्षरति भाषमाणो यस्यां लब्धौ सा, क्षीरास्रवा । आदिशब्दान्मध्वास्रवा सर्पिरास्रवामृतास्रवा चेत्यादिको यो लब्ध्योघो लब्धिसंघातः तमासाद्योपलभ्य परमाक्षयं परमं सर्वसुन्दरमक्षयं चानेकधोपजीव्यमानमप्यनुपरमस्वभावम् । किमित्याह । कुर्वन्ति विदधति भव्यसत्त्वानाम् उपकर्तुं योग्यानाम् उपकारं सम्यक्त्वज्ञानचारित्रलाभलक्षणम् अनुत्तमं निर्वाणैकफलत्वेनान्योपकारातिशायिनमिति ॥

तथा ।

मुच्यन्ते चाशु संसारादत्यन्तमसमञ्जसात् ।
जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतात् ॥ १०४ ॥

इति ॥ मुच्यन्ते परिहीयन्ते । चः समुच्चये । आशु शीघ्रम् संसाराद्भवात् कीदृशादित्याह अत्यन्तम् अतीव संगतं युक्तमञ्जः स्वरूपं यस्य स तथा तत्प्रतिषेधादसमञ्जसः तस्मात् । अत एव जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतात् जन्मना

प्रादुर्भावेन मृत्युना मरणेन जरया स्थविरभावलक्षणया व्याधिना कुष्ठादिरूपेण शोकेनेष्टवियोगप्रभवमनोदुःखविशेषेण। आदिशब्दाच्छीतवातादिभिरुपद्रवैरुपद्रुतादिक्कलतामानीता-दिति ॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ यति-धर्मविधिः पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

# षष्ठोऽध्यायः ॥

व्याख्यातः पञ्चमोऽध्यायः । अधुना षष्ठो व्याख्यायते । तस्येदमादिसूत्रम् ।

आशयाद्युचितं ज्यायोऽनुष्ठानं सूरयो विदुः ।
साध्यसिद्ध्यङ्गमित्यस्माद्यतिधर्मो द्विधा मतः ॥ १ ॥

इति ॥ आशयस्य चित्तवृत्तिलक्षणस्य । आदिशब्दाच्छ्रुतसंपत्तेः शरीरसंहननस्य परोपकारकरणाकरणशक्तेश्च । उचितं योग्यं ज्यायोऽतिप्रशस्यमनुष्ठानं जिनधर्मसेवालक्षणं सूरयः समयज्ञा विदुर्जानन्ति । कीदृशमित्याह साध्यसिद्ध्यङ्गं साध्यस्य सकलक्लेशक्षयलक्षणस्य सिद्ध्यङ्गं निष्पत्तिकारणम् । इत्यस्मात् कारणात् यतिधर्मो द्विधा मतः सापेक्षयतिधर्मतया निरपेक्षयतिधर्मतया चेति ॥

साध्यसिद्ध्यङ्गत्वमेव भावयति ।

समग्रा यत्र सामग्री तदक्षेपेण सिध्यति ।
दवीयसापि कालेन वैकल्ये तु न जातुचित् ॥ २ ॥

इति ॥ समग्रा परिपूर्णा यत्र कार्ये सामग्री समग्रसंयोगलक्षणा भवति तत्कार्यमक्षेपेणाविलम्बेन सिध्यति निष्पद्यते अन्यथा सामग्रीसमग्रतायोगात् । अत्रैव, व्यतिरेकमाह दवीयसापि अतिचिरकालरूपतया दूरतरवर्तिनापि कालेन वैकल्ये

तु सामग्रिकाया विकलतायां पुनः न जातुचित् न कदाचिदपीति ॥

एवं सति यत्कर्तव्यं तदाह ।

**तस्माद्यो यस्य योग्यः स्यात्तत्तेनालोच्य सर्वथा ।**
**आरब्धव्यमुपायेन सम्यगेष सतां नयः ॥ ३ ॥**

इति ॥ तस्मात्कारणात् यो यतिः यस्य सापेक्षयतिधर्म-निरपेक्षयतिधर्मयोरन्यतरानुष्ठानस्य योग्यः समुचितः स्याद्भवेत् तदनुष्ठानम् तेन योग्येन आलोच्य निपुणोहापोहयोगेन परिभाव्य सर्वथा सर्वैरुपाधिभिः आरब्धव्यमारम्भणीयम् । उपायेन तद्गतेनैव । सम्यग् यथावत् एष योग्यारम्भलक्षणः सतां शिष्टानां नयो नीतिरिति ॥

**इत्युक्तो यतिधर्मः। इदानीमस्य विषय-विभागमनुवर्णयिष्यामः ॥ ४ ॥**

इति ॥ प्रतीतार्थमेवेति ॥

**तत्र कल्याणाशयस्य श्रुतरत्नमहोदधेः उप-शमादिलब्धिमतः परहितोद्यतस्य अत्यन्तगम्भीर-चेतसः प्रधानपरिणतेः विधूतमोहस्य परम-सत्त्वार्थकर्तुः सामायिकवतः विशुद्ध्यमानाशयस्य यथोचितप्रवृत्तेः सात्मीभूतशुभयोगस्य श्रेयान् सापेक्षयतिधर्म एव ॥ ५ ॥**

इति ॥ तत्र इति विषयविभागानुवर्णनोपक्षेपे ।

कल्याणाशयस्य भावारोग्यरूपमुक्तिपुरप्रापकपरिणामस्य। श्रुतरत्नमहोदधेः प्रवचनमाणिक्यपरमनौरनिधेः। उपशमादिलब्धिमत उक्तलक्षणोपशमादिलब्धिसमन्वितस्य। परहितोद्यतस्य सर्वजगज्जीवजातहिताधानधनस्य। अत्यन्तगम्भीरचेतसो हर्षविषादादावतिनिपुणैरप्यनुपलभ्यचित्तविकारस्य। अत एव प्रधानपरिणतेः सर्वोत्तमात्मपरिणामस्य। विधूतमोहस्य समुत्तीर्णमूढभावतन्द्रामुद्रस्य। परमसत्त्वार्थकर्तुर्निर्वाणावन्ध्यबीजसम्यक्त्वादिसत्त्वप्रयोजनविधातुः। सामायिकवतो माध्यस्थ्यगुणतुलारोपणवशसमतोपनीतस्वजनपरजनादिभावस्य। विशुद्ध्यमानाशयस्य धवलपक्षक्षपापतिमण्डलस्येव प्रतिकलमवदातमानसस्य। यथोचितप्रवृत्तेः प्रस्तावप्रायोग्यप्रारब्धप्रयोजनस्य। अत एव सात्मीभूतशुभयोगस्यायःपिण्डस्येव वह्निना शुभयोगेन सह समानीभूतात्मनो यतिविशेषस्य। श्रेयान् अतिप्रशस्यः सापेक्षयतिधर्म एव नेतर इति॥

कुत इत्याह।

**प्रवचनप्रामाण्यात्[१] ॥ ६ ॥**

इति॥ भगवदाज्ञाप्रमाणभावात्॥

एतदपि कुत इत्याह।

**संपूर्णदशपूर्वविदो निरपेक्षधर्मप्रतिपत्तिप्रतिषेधात्॥ ७ ॥**

इति॥ सुगममेव। प्रतिषेधश्च

---

१ D P °वचनं°।

गच्छे च्चिय निम्माओ जा पुव्वा दस भवे असंपुण्णा।
नवमस्स तइयवत्थू होइ जहन्नो सुयाभिगमो ॥ १ ॥

इति वचनादवसीयते ॥

एषोऽपि किमर्थमित्याह ।

**परार्थसंपादनोपपत्तेः ॥ ८ ॥**

इति ॥ परार्थस्य परोपकारलक्षणस्य संपादनं करणं तदुपपत्तेः । स हि दशपूर्वधरस्तीर्थोपष्टम्भलक्षणं परार्थं संपादयितुं यस्मादुपपद्यत इति ॥

यदि नामैवं ततोऽपि किमित्याह ।

**तस्यैव च गुरुत्वात् ॥ ९ ॥**

इति ॥ तस्य परार्थसंपादनस्य । एव च इत्यवधारणे । गुरुत्वात्सर्वधर्मानुष्ठानेभ्य उत्तमत्वात् ॥

एतदपि कथमित्याह ।

**सर्वथा दुःखमोक्षणात् ॥ १० ॥**

इति ॥ सर्वथा सर्वैः प्रकारैः स्वस्य परेषां चेत्यर्थः । दुःखानां शारीरमानसरूपाणां मोचनात् ॥

तथा ।

**संतानप्रवृत्तेः ॥ ११ ॥**

इति ॥ परार्थसंपादनात्संतानस्य शिष्यप्रशिष्यादिप्रवाहरूपस्य प्रवृत्तेः ॥

तथा ।

योगत्रयस्याप्युदग्रफलभावात् ॥ १२ ॥

इति ॥ योगत्रयस्यापि मनोवाक्कायकरणव्यापाररूपस्य परार्थसंपादने क्रियमाणे । न पुनरेकस्यैवेत्यपिशब्दार्थः । उदग्रफलभावादुदग्रस्य प्रकारान्तरेणानुपलभ्यमानत्वेनात्युत्तमस्य फलस्य कर्मनिर्जरालक्षणस्य भावात् । न हि यथा देशनायां सर्वात्मना व्याप्रियमाणं मनोवाक्कायत्रयं फलमाप्नोति तथान्यत्र कृत्यान्तर इति ॥

तथा ।

निरपेक्षधर्मोचितस्यापि तत्प्रतिपत्तिकाले परपरार्थसिद्धौ तदन्यसंपादकाभावे प्रतिपत्तिप्रतिषेधाच्च ॥ १३ ॥

इति ॥ निरपेक्षधर्मोचितस्यापि किं पुनस्तदनुचितस्येत्यपिशब्दार्थः । तत्प्रतिपत्तिकाले निरपेक्षधर्माङ्गीकरणसमये परपरार्थसिद्धौ परेषां परार्थस्य सम्यग्दर्शनादेः प्रधानप्रयोजनस्य सिद्धौ साध्यायां विषये । तदन्यसंपादकाभावे तस्मान्निरपेक्षयतिधर्मोचितादन्यस्य साधोः परार्थसिद्धिसंपादकस्याभावे प्रतिपत्तिप्रतिषेधादङ्गीकरणनिवारणात् । चकारो हेत्वन्तरसमुच्चये । तस्यैव च गुरुत्वमिति संटङ्क इति ॥

इत्थं सापेक्षयतिधर्मयोग्यमुक्त्वा निरपेक्षयतिधर्मयोग्यं वक्तुमाह ।

नवादिपूर्वधरस्य तु यथोदितगुणस्यापि साधुशिष्यनिष्पत्तौ साध्वन्तराभावतः सति कायादि-

**सामर्थ्ये सद्वीर्याचारासेवनेन तथा प्रमादजयाय सम्यगुचितसमय आज्ञाप्रामाण्यतस्तथैव योगवृद्धेः प्रायोपवेशनवच्छ्रेयान्निरपेक्षयतिधर्मः ॥ ६४ ॥**

इति ॥ नवादिपूर्वधरस्य तु यथोदितगुणस्यापि तत्र कल्याणाशयस्य इत्यादिसूत्रनिरूपितगुणस्य किं[१] पुनस्तदन्यगुणस्येत्यपिशब्दार्थः । साधुशिष्यनिष्पत्तावाचार्योपाध्यायप्रवर्तकस्थविरगणावच्छेदकलक्षणपदपञ्चकयोग्यतया साधूनां शिष्याणां निष्पत्तौ सत्याम् । साध्यान्तराभावतः साध्यान्तरस्य निरपेक्षधर्मापेक्षया आचारपरिपालनादिरूपस्याभावतोऽभवनेन । सति विद्यमाने कायादिसामर्थ्ये आद्यसंहननत्रययुक्ततया वज्रकुड्यसमानधृतितया च महति कायमनसोः समर्थभावे सति । सद्वीर्याचारासेवनेन सतो विषयप्रवृत्ततया सुन्दरस्य वीर्याचारस्य सामर्थ्यागोपनलक्षणस्य निषेवणेन । तथा प्रमादजयाय तथा तेन निरपेक्षयतिधर्मप्रतिपत्तिप्रकारेण यः प्रमादस्य निद्रादेर्जयोऽभिवः तदर्थम् । सम्यक् शास्त्रोक्तनीत्या तपःसत्त्वसूत्रैकत्वबललक्षणाभिः पञ्चभिस्तुलनाभिरात्मानं तोलयित्वा । उचितसमये तिथिवारनक्षत्रयोगलग्नशुद्धिलक्षणे । आज्ञाप्रामाण्यत आज्ञैवात्रार्थे प्रमाणमिति परिणामात् । तथैव प्रतिपित्सितनिरपेक्षयतिधर्मानुरूपतयैव योगवृद्धेः सम्यग्दर्शनज्ञानचारित्र-

१ The passage from किं down to ऽभवनेन (l. 9) is given by B and C this form किं पुनस्तदन्यनिर्जराङ्गमङ्गं विपर्ययाल्लिङ्गि । अननुष्ठानमननुष्ठानमेव न भवति । अन्यदित्यस्याननुष्ठितानुष्ठानात्तर्हि कीदृशं तदित्याह । अभवनेन ।

लक्षणधर्मव्यापारवृद्धेः। प्रायोपवेशनवत्प्रायोपवेशनमनशनं तद्वत् पर्यन्तकालकरणीयानशनक्रियातुल्य इत्यर्थः। श्रेयान् अतिप्रशस्यः। निरपेक्षयतिधर्मो जिनकल्पादिरूपः कल्पादिग्रन्थप्रसिद्धस्वरूपो वर्तत इति॥

तथा।

तत्कल्पस्य च परं परार्थलब्धिविकलस्य॥ १५॥

इति॥ तत्कल्पस्य निरपेक्षयतिधर्मप्रतिपत्तिसमर्थपुरुषविशेषतुल्यस्यान्यस्यापि। चशब्दः समुच्चये। परं केवलं परार्थलब्धिविकलस्य तथाविधान्तरायादिकर्मपारतन्त्र्यदोषात्परार्थलब्ध्या साधुशिष्यनिष्पादनादिसामर्थ्यलक्षणया विकलस्य श्रेयान्निरपेक्षयतिधर्मः इत्यनुवर्तते॥

अत्र हेतुमाह।

उचितानुष्ठानं हि प्रधानं कर्मक्षयकारणम्॥ १६॥

इति॥ उचितानुष्ठानम्। हिर्यस्मात्। प्रधानमुत्कृष्टं कर्मक्षयकारणमिति[१]॥

एतदपि कुत इत्याह।

उदग्रविवेकभावाद्रत्नत्रयाराधनात्॥ १७॥

इति॥ उदग्रस्योत्कटस्य विवेकस्य विधेयाविधेयवस्तुविभागविज्ञानलक्षणस्य भावात्सकाशात्। किमित्याह, रत्नत्रयस्य

[१] B omits the commentary on this sūtra.

सम्यग्दर्शनादेराराधनानिष्पादनात्। उचितानुष्ठाने हि प्रारब्धे नियमाद्रत्नत्रयाराधक उदग्रो विवेको विजृम्भत इत्येतत्प्रधानं कर्मक्षयकारणमिति॥

अत्रैव व्यतिरेकमाह।

**अननुष्ठानमन्यदकामनिर्जराङ्गमुक्तविपर्ययात्॥ १८॥**

इति॥ अननुष्ठानमनुष्ठानमेव न भवति। अन्यद्विलक्षणमुचितानुष्ठानात्। तर्हि कीदृशं तदित्याह अकामनिर्जराङ्गम् अकामस्य निरभिलाषस्य तथाविधबलीवर्दादेरिव या निर्जरा कर्मक्षपणा तस्या अङ्गं निमित्तं न तु मुक्तिफलाया निर्जरायाः। कुत इत्याह उक्तविपर्ययात् उदग्रविवेकाभावेन रत्नत्रयाराधनाभावादिति॥

एतदेव भावयन्नाह।

**निर्वाणफलमत्र तत्त्वतोऽनुष्ठानम्॥ १९॥**

इति॥ निर्वाणफलं मुक्तिकार्यम् अत्र जिनवचने तत्त्वतः परमार्थवृत्त्यानुषङ्गतः स्वर्गादिफलभावेऽपि अनुष्ठानं सम्यग्दर्शनाद्याराधनारूपम्। प्रोच्यत इति॥

यदि नामैवं ततोऽपि किमित्याह।

**न चासदभिनिवेशवत्तत्॥ २०॥**

इति॥ न च नैवासुन्दराग्रहयुक्तम् तन्निर्वाणफलमनुष्ठानम्। असदभिनिवेशो हि निष्ठुरेऽप्यनुष्ठाने मोक्षफलं

प्रतिबध्नातीति तद्भावच्छेदार्थमुक्तं न चासदभिनिवेशवत्तत् इति ॥

नन्वनौचित्येऽप्यनुष्ठानं च भविष्यति मिथ्याभिनिवेशरहितं चेत्याशङ्क्याह ।

**अनुचितप्रतिपत्तौ नियमादसदभिनिवेशोऽन्यत्रानाभोगमात्रात् ॥ २१ ॥**

इति ॥ अनुचितस्यानुष्ठानस्य प्रतिपत्तावभ्युपगमे । नियमादवश्यंतया । असदभिनिवेश उक्तरूपः । असदभिनिवेशकार्यत्वादनुचितानुष्ठानस्य । अपवादमाह अन्यत्रानाभोगमात्रात् इति । अन्यत्र विनानाभोग एवापरिज्ञानमेव केवलमभिनिवेशशून्यमनाभोगमात्रं तस्मात् अनाभोगमात्रादनुचितप्रतिपत्तावपि नासदभिनिवेश इति ॥

एवं सति किं सिद्धमित्याह ।

**संभवति तद्वतोऽपि चारित्रम् ॥ २२ ॥**

इति ॥ संभवति जायते । तद्वतोऽप्यनाभोगमात्रादनुचितप्रतिपत्तिमतोऽपि किं पुनस्तदन्यस्येत्यपिशब्दार्थः । चारित्रं सर्वविरतिरूपम् ॥

अत्रैव विशेषमाह ।

**अनभिनिवेशवांस्तु तद्युक्तः खल्वतत्त्वे ॥ २३ ॥**

इति॥ अनभिनिवेशवान् निराग्रहः पुनः । तद्युक्तश्चारित्रयुक्तो जीवोऽनाभोगेऽपि खलु निश्चयेन अतत्त्वे प्रवचनबाधितार्थे ॥

एतदपि कुत इत्याह ।

स्वस्वभावोत्कर्षात् ॥ २४ ॥

इति ॥ स्वस्यानौपाधिकत्वेन निजस्य स्वभावस्यात्मतत्त्वस्य उत्कर्षाद्वृद्धेः । चारित्रिणो हि जीवस्य छद्मस्थतया क्वचिदर्थेऽनाभोगेऽपि गौतमादिमहामुनीनामिव तथाविधात्यन्तिकबाधककर्माभावेन स्वस्वभावः सम्यग्दर्शनादिरूपो नापकर्षं प्रतिपद्यत इति ॥

अयमपि कुत इत्याह ।

मार्गानुसारित्वात् ॥ २५ ॥

इति ॥ मार्गस्य सम्यग्दर्शनादेर्मुक्तिपथस्यानुवर्तनात् ।

तदपि ।

तथारुचिस्वभावत्वात् ॥ २६ ॥

इति ॥ तथा तत्प्रकारा मार्गानुरूपत्वेन या रुचिः श्रद्धा तद्रूपत्वात् ॥

एतदपि ।

श्रवणादौ प्रतिपत्तेः ॥ २७ ॥

इति ॥ स्वयमेव शास्त्रश्रवणे । आदिशब्दादन्येन वा प्रेरणायां ज्ञापनायाम् । प्रतिपत्तेः अनाभोगेन विहितं मयेदमसुन्दरमनुष्ठानं इत्यङ्गीकरणात् ॥

इयमपि ।

असदाचारगर्हणात् ॥ २८ ॥

इति ॥ असदाचारस्यानुचितानुष्ठानस्य गर्हणात्तदुचितप्रायश्चित्तप्रतिपत्त्या निन्दनात् ॥

अथ प्रस्तुतमेव निगमयन्नाह ।

इत्युचितानुष्ठानमेव सर्वत्र श्रेयः ॥ २९ ॥

इति ॥ इत्येवमनुचितानुष्ठाने नियमादसदभिनिवेशभावात् उचितानुष्ठानमेव सर्वत्र गृहस्थधर्मप्रतिपत्तौ यतिधर्मप्रतिपत्तौ च श्रेयः प्रशस्यं वर्तते ॥

कुत इत्याह ।

भावनासारत्वात्तस्य ॥ ३० ॥

इति ॥ भावना निरुपाधिको जीववासकः परिणामः । ततो भावना सारं प्रधानं यत्र तत्तथा तद्भावस्तत्त्वं तस्मात् । तस्योचितानुष्ठानस्य ॥

भावनामेव पुरस्कुर्वन्नाह ।

इयमेव प्रधानं निःश्रेयसाङ्गम् ॥ ३१ ॥

इति ॥ इयमेव भावना प्रधानं निःश्रेयसाङ्गं निर्वाणहेतुः ॥

एतदपि कुत इत्याह ।

एतत्स्थैर्याद्धि कुशलस्थैर्योपपत्तेः ॥ ३२ ॥

इति ॥ एतस्या भावनायाः स्थैर्यात्स्थिरभावात् । हिः स्फुटम् । कुशलानां सकलकल्याणाचरणानां स्थैर्यस्योपपत्तेर्घटनात् ॥

इयमपि कुत इत्याह ।

**भावनानुगतस्य ज्ञानस्य तत्त्वतो ज्ञानत्वात् ॥ ३३ ॥**

इति ॥ इह त्रीणि ज्ञानानि श्रुतज्ञानं चिन्ताज्ञानं भावनाज्ञानं[1] चेति । तल्लक्षणं चेदम् ।

वाक्यार्थमात्रविषयं कोष्ठकगतबीजसन्निभं ज्ञानम् ।
श्रुतमयमिह विज्ञेयं मिथ्याभिनिवेशरहितमलम् ॥ १ ॥
यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम् ।
उदक इव तैलबिन्दुर्विसर्पि चिन्तामयं तत्स्यात् ॥ २ ॥
ऐदम्पर्यगतं यद्विध्यादौ यत्नवत्तथैवोच्चैः ।
एतत्तु भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥ ३ ॥

ततो भावनानुगतस्य भावनानुविद्धस्य ज्ञानस्य बोधविशेषस्य तत्त्वतः पारमार्थिकवृत्त्या ज्ञानत्वादवबोधत्वात् ।

एतदेव व्यतिरेकतः साधयन्नाह ।

**न हि श्रुतमय्या प्रज्ञया भावनादृष्टज्ञातं ज्ञातं[2] नाम ॥ ३४ ॥**

इति ॥ न नैव । हिर्यस्मात् । श्रुतमय्या प्रथमज्ञानरूपया प्रज्ञया बुद्ध्या कर्तृभूतया करणभूतया वा । भावनादृष्टज्ञातं

---

१ B C भावज्ञानं । २ C omits.

भावनया भावनाज्ञानेन दृष्टं सामान्येन ज्ञातं च विशेषेण भावनादृष्टज्ञातं वस्तु ज्ञातमवबुद्धं भवति । नाम इति विद्वज्जनप्रकटमेतत् । अयमभिप्रायः । यादृशं भावनाज्ञानेन वस्तु दृश्यते ज्ञायते च न तथा श्रुतज्ञानेनेति ।

कुत इत्याह ।

उपरागमात्रत्वात् ॥ ३५ ॥

इति ॥ उपराग एव केवल उपरागमात्रं तद्भावस्तत्त्वं तस्मात् । यथा हि[1] स्फटिकमणेर्जपाकुसुमादिसंनिधानत उपराग एव न पुनस्तद्भावपरिणतिः संपद्यते एवं श्रुतमय्यां प्रज्ञायामात्मनो बोधमात्रमेव बहिरङ्गं न त्वन्तःपरिणतिरिति ।

एतदपि कुत इत्याह ।

दृष्टवदपायेभ्योऽनिवृत्तेः ॥ ३६ ॥

इति ॥ यथा भावनाज्ञानेन दृष्टेभ्य उपलक्षणत्वाज्ज्ञातेभ्यश्चानर्थेभ्यो निवर्तते एवं श्रुतमयप्रज्ञाप्रवृत्तावप्यपायेभ्योऽनिवृत्तेरनिवर्तनात् ॥

ननु भावनाज्ञानेऽप्यपायेभ्यो निवृत्तिरसंभविनीत्याह ।

एतन्मूले च हिताहितयोः प्रवृत्तिनिवृत्ती ॥ ३७ ॥

इति ॥ एतन्मूले च भावनाज्ञानपूर्विके एव चकारस्यैवार्थत्वात् । हिताहितयोः प्रतीतयोर्यथासंख्यं प्रवृत्तिनिवृत्ती विधिप्रतिषेधरूपे भवतो मतिमतां नान्यज्ञानमूले इति ।

१ B C तथा हि ।

इदमेवोपचिन्वन्नाह।

**अत एव भावनादृष्टज्ञाताद्विपर्ययायोगः ॥ ३८ ॥**

इति ॥ अत एव भावनामूलत्वादेव हिताहितप्रवृत्ति-निवृत्त्योः। भावनादृष्टज्ञाताद्भावनया दृष्टं ज्ञातं च वस्तु प्राप्य। विपर्ययायोगो विपर्यासाप्रवृत्तिलक्षणो जायते। यतो न मति-विपर्यासमन्तरेण पुंसो हितेष्वप्रवृत्तिरहितेषु च प्रवृत्तिः स्यात्। न चासौ भावनाज्ञाने समस्तीति।

एतदपि कथं सिद्धमित्याह।

**तद्वन्तो हि दृष्टापाययोगेऽप्यदृष्टापायेभ्यो निवर्तमाना दृश्यन्त एवान्यरक्षादाविति ॥ ३९ ॥**

इति। तद्वन्तो भावनाज्ञानवन्तः प्रमातारः। हिर्यस्मात्। दृष्टापाययोगेऽपि प्रत्यक्षोपलभ्यमानमरणाद्यपायप्राप्तौ किं पुनस्तदप्राप्तावित्यपिशब्दार्थः। अदृष्टापायेभ्यो नरकादिगति-प्रापणीयेभ्यः। निवर्तमानाः सुवर्णमययवभक्षिक्रौञ्चजीवा-कथकार्द्रचर्मशिरोवेष्टनाविष्टसुवर्णकारारब्धमारणमहामुनिमेतार्य इवाद्यापि महासत्त्वाः केचन दृश्यन्ते एव। अन्यरक्षादावन्यस्य स्वव्यतिरिक्तस्य रक्षायां मरणादित्राणरूपायाम् आदिशब्दा-दुपकारे च मार्गश्रद्धानाद्यारोपरूपे। इतिशब्दो वाक्य-परिसमाप्तौ ॥

निगमयन्नाह ।

इति मुमुक्षोः सर्वत्र भावनायामेव यत्नः श्रेयान् ॥४०॥

इति ॥ इत्येवमुक्तयुक्तेः । मुमुक्षोर्यतेः । सर्वत्र कृत्ये भावनायामेवोक्तलक्षणायाम् । यत्न आदरः । श्रेयान् प्रशस्यः ।

कुत इत्याह ।

तद्भावे निसर्गत एव सर्वथा दोषोपरतिसिद्धेः ॥४१॥

इति ॥ तद्भावे भावनाभावे निसर्गत एव स्वभावादेव सर्वथा सर्वैः प्रकारैः दोषाणां रागादीनामुपरतिसिद्धेः ॥

अथ भावनाया एव हेतुमाह ।

वचनोपयोगपूर्वा विहितप्रवृत्तिर्योनिरस्याः ॥४२॥

इति ॥ वचनोपयोगः शास्त्र इदमित्थं चेत्थं चोक्तं इत्यालोचनारूपः पूर्वो मूलं यस्याः सा तथा । केत्याह विहिते प्रत्युपेक्षणादौ प्रवृत्तिर्विहितप्रवृत्तिः । योनिरुत्पत्तिस्थानम् । अस्या भावनाया भावनाज्ञानस्येत्यर्थः ॥

कुत इत्याह ।

महागुणत्वाद्वचनोपयोगस्य ॥ ४३ ॥

इति । अत्यन्तोपकारित्वाद्वचनोपयोगस्योक्तरूपस्य ।

एतदेव भावयन्नाह ।

तत्र ह्यचिन्त्यचिन्तामणिकल्पस्य भगवतो बहुमानगर्भं स्मरणम् ॥ ४४ ॥

इति ॥ तच्च वचनोपयोगे सति। हिर्यस्मात्। अचिन्त्येन चिन्तयितुमशक्यप्रभावेण चिन्तामणिना मणिविशेषेण कल्पस्य तुल्यस्य भगवतः पारगतस्य बहुमानगर्भं प्रीतिसारं स्मरण-मनुध्यानं जायते।

कथमित्याह।

भगवतैवमुक्तमित्याराधनायोगात् ॥ ४५ ॥

इति ॥ भगवतार्हता। एवं क्रियमाणप्रकारेण। उक्तं निरूपितं प्रत्युपेक्षणादि इत्यनेन रूपेण। आराधनायोगा-दनुकूलभावजननेनेति ॥

एवं सति यत्सिद्धं तदाह।

एवं च प्रायो भगवत एव चेतसि समव-स्थानम् ॥ ४६ ॥

इति ॥ एवं चेतस्मिंश्च बहुमानगर्भे भगवत्स्मरणे सति। प्रायो बाहुल्येन भगवत एव चेतसि समवस्थानं निवेशनम्। प्रायोग्रहणं च क्रियाकाले क्रियायामेव चित्तावस्थानं विधेयम् अन्यथा तत्क्रियाया द्रव्यत्वप्रसङ्गादिति सूचनार्थमिति ॥

ननु तदुक्तकरणात्किं नाम सिध्यतीत्याह।

तदाज्ञाराधनाच्च तद्भक्तिरेव ॥ ४७ ॥

इति ॥ तस्य भगवत आज्ञाराधनात्पुनस्तद्भक्तिरेव भग-वद्भक्तिरेवेति ॥

एतदपि भावयितुमाह ।

**उपदेशपालनैव भगवद्भक्तिर्नान्या कृतकृत्यत्वात् ॥ ४८ ॥**

इति ॥ प्रकटार्थमेतदिति ॥

एवं तर्हि कथमस्य पुष्पादिपूजाविधिरित्याशङ्क्याह ।

**उचितद्रव्यस्तवस्यापि तद्रूपत्वात् ॥ ४९ ॥**

इति ॥ उचितस्य द्रव्यस्तवस्य

काले सुइभूएणं विसिट्ठपुप्फाइएहिं विहिणा उ ।
सारथुइथोत्तगरुई जिणपूया होइ कायव्वा ॥ १ ॥

इत्यादिवचनोक्तरूपस्य किं पुनर्भावस्तवस्येत्यपिशब्दार्थः । सोपदेशपालना रूपमस्य तद्भावस्तत्त्वं तस्मात् ॥

कुत इत्याह ।

**भावस्तवाङ्गतया विधानात् ॥ ५० ॥**

इति ॥ शुद्धयतिधर्मकारणतया विधानाद्द्रव्यस्तवस्य । यदा हि विषयपिपासादिभिः कारणैः साधुधर्ममन्दिरशिखरमारोढुमक्षमो धर्मं च चिकीर्षुः प्राणी तदा महतः सावद्यान्तरान्निवृत्तेरुपायमन्यमस्यापश्यन् भगवानर्हन् सदारम्भरूपं द्रव्यस्तवमुपदिदेश । यथा ।

जिनभवनं जिनबिम्बं जिनपूजां जिनमतं च यः कुर्यात् ।
तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥१॥ इति ।

एवं च द्रव्यस्तवोऽपि भगवदुपदेशपालनारूप एवेति भावः ॥

अथ भगवति चित्तावस्थिते फलमाह ।

**हृदि स्थिते च भगवति क्लिष्टकर्मविगमः ॥५१॥**

इति ॥ प्रतीतार्थमेव । परं क्लिष्टकर्म तदुच्यते यत्संसारवासैकनिबन्धनमिति ॥

एतदपि कुत इत्याह ।

**जलानलवदनयोर्विरोधात् ॥ ५२ ॥**

इति ॥ वारिवैश्वानरयोरिवानयोर्भगवच्चित्तावस्थानक्लिष्टकर्मणोर्विरोधात्परस्परबाधनात् ॥

पुनरपि प्रकृतोपसंहारमाह ।

**इत्युचितानुष्ठानमेव सर्वत्र प्रधानम् ॥ ५३ ॥**

इति । एतत्प्राग्वत् ॥

कथमेतदित्याह ।

**प्रायोऽतिचारासंभवात् ॥ ५४ ॥**

इति ॥ यो हि स्वोचितं कर्म कर्तुमारभते न तस्य तत्रातिचारः संभवति । प्रायोग्रहणेन चेदमाह । तथाविधानाभोगदोषान्निकाचितक्लिष्टधर्मोदयाद्वा कदाचित्कस्यचित्तथाविधसन्मार्गगामिनः पथिकस्येव कण्टकज्वरदिग्मोहसमानोऽतिचारः स्यादपीति ॥

एतदपि कथमित्याह ।

यथाशक्ति प्रवृत्तेः ॥ ५५ ॥

इति ॥ यथाशक्ति यथासामर्थ्यं सर्वकार्येषु प्रवृत्तेः ॥

[इयमपि कथम् । उच्यते ।

सद्भावप्रतिबन्धात् ॥ ५६ ॥

इति ॥ सद्भावे शक्यतया सत्यरूपे कृत्येऽर्थे चित्तस्य प्रतिबन्धात्प्रतिबद्धत्वात् ॥

विपर्यये बाधकमाह ।

इतरथार्तध्यानापत्तिः ॥ ५७ ॥

इति ॥ इतरथानुचितारम्भे । आर्तध्यानस्य प्रतीतरूपस्य । आपत्तिः प्रसङ्गः स्यात् ॥

कथमित्याह ।

अकालौत्सुक्यस्य तत्त्वतस्तत्त्वात् ॥ ५८ ॥

इति ॥ अकाले चिकीर्षितकार्याप्रस्तावे यदौत्सुक्यं तत्कालोचितकार्यान्तरपरिहारेण तीव्रचिकीर्षालक्षणं तस्य । तत्त्वतः परमार्थतः तत्त्वादार्तध्यानत्वात् । व्यवहारतस्तु धर्मध्यानत्वमपीति तत्त्वग्रहणमिति ॥

नन्वनुत्सुकः प्रवृत्तिकालमपि कथं लप्स्यत इत्याशङ्क्याह ।

नेदं प्रवृत्तिकालसाधनम् ॥ ५९ ॥

इति ॥ न नैव । इदमौत्सुक्यं प्रवृत्तिकालसाधनं कार्यस्य यः प्रवृत्तिकालः प्रस्तावलक्षणः तस्य साधनं हेतुरनवसरोपहतत्वात् । न ह्यत्यन्तं बुभुक्षवोऽपि पुरुषा अप्रस्तावे भोजनं लभन्ते किं तु प्रस्ताव एवेति ॥

अतः किं विधेयमित्याह ।

इति सदोचितम् ॥ ६० ॥

इति ॥ इत्येवं सदा सर्वकालमुचितमारब्धव्यं निरुत्सुकेन सता ॥

कुत इत्याह ।

तदा तदसत्त्वात् ॥ ६१ ॥

इति ॥ तदा प्रवृत्तिकाले तस्यौत्सुक्यस्यासत्त्वादभावात् । न हि सम्यगुपायप्रवृत्ता मतिमन्तः कार्यौत्सुक्यमवलम्बन्ते सदुपायस्य कार्यमप्रसाध्योपरमाभावात् । ततो यो यस्य साधनभावेन व्याप्रियते स तत्कार्यप्रवृत्तिकाले नियमात्स्वसत्त्वमादर्शयति यथा मृत्पिण्डादिर्घटस्य । नादर्शयति चात्मानमौत्सुक्यं कार्यप्रवृत्तिकाले मतिमतामिति कथं तत्तत्साधनभावं लब्धुमर्हतीति । अत एव पठ्यतेऽन्यत्र ।

अत्वरापूर्वकं सर्वं गमनं कृत्यमेव वा ।
प्रणिधानसमायुक्तमपायपरिहारतः ॥ १ ॥

यदि नौत्सुक्यं प्रवृत्तिकालसाधनं तर्हि किं साधनमित्याशङ्क्याह ।

**प्रभूतान्येव तु प्रवृत्तिकालसाधनानि ॥ ६२ ॥**

इति ॥ प्रभूतान्येव तु बहून्येव न पुनरेकं किंचन प्रवृत्तिकालसाधनानि सन्तीति ॥

कुत इत्याह ।

**निदानश्रवणादेरपि केषांचित्प्रवृत्तिमात्रदर्शनात् ॥ ६३ ॥**

इति ॥ इह निदानशब्दः कारणमात्रपर्यायः । यथा किमत्र रोगे निदानम् इत्यादौ प्रयोगे । ततो निदानस्य भोगादिफलत्वेन दानादेः श्रवणाद्देशनायाम् । यथा ।

भोगा दानेन भवन्ति देहिनां सुरगतिश्च शीलेन ।
भावनया च विमुक्तिस्तपसा सर्वाणि सिध्यन्ति ॥ १ ॥

आदिशब्दात्तथाविधश्रुतादिलिप्सास्वजनोपरोधबलात्कारादेः कारणात् । केषांचिद्गोविन्दवाचकसुन्दरीनन्दार्यसुहस्तिदीक्षितद्रुमकभवदेवकरोटकगणिप्रभृतीनां प्रवृत्तिमात्रस्य प्रवृत्तेरेव केवलायास्तात्त्विकोपयोगशून्यायाः प्रथमं प्रव्रज्यायां दर्शनाच्छास्त्रकारैरवलोकनात् ॥

ननु कथं तत्प्रवृत्तिमात्रं सद्भावप्रव्रज्याप्रतिपत्तिकालहेतुरित्याशंक्याह ।

**तस्यापि तथापारंपर्यसाधनत्वम्[1] ॥ ६४ ॥**

---

१ C omits the sûtra.

इति ॥ तथापि प्रवृत्तिमात्रस्य किं पुनरन्यस्य भव-वैराग्यादेरित्यपिशब्दार्थः । तथापारंपर्येण तत्प्रकारपरंपरया साधनत्वं साधनभावः । श्रूयते हि । केचन पूर्वं तथाविधभोगाभिलाषादिनालम्बनेन द्रव्यप्रव्रज्यां प्रतिपद्य पश्चात्तदभ्यासेनैव व्यावृत्त्या अतितीव्रचारित्रमोहोदया भावप्रव्रज्याप्रतिपत्तिकालाराधकाः संजाताः । यथा अमी एव गोविन्दादयः इति ॥

तर्हि प्रवृत्तिमात्रमपि कर्तव्यमापन्नमित्याह ।

## यतिधर्माधिकारश्चायमिति प्रतिषेधः ॥ ६५ ॥

इति ॥ यतिधर्माधिकारः शुद्धसाधुधर्मप्रस्तावः पुनरयं प्रक्रान्तः । इत्येतस्माद्धेतोः प्रतिषेधो निवारणं प्रवृत्तिमात्रस्य । न हि यथा कथंचित्प्रवृत्तः सर्वोऽपि प्राणी भावधर्मप्रवृत्तिकालाराधको भवति किं तु घुणाक्षरवृत्त्या कश्चिदेवेति सर्वत्रौचित्येन प्रवर्तितव्यम् ॥

अभ्युच्चयमाह ।

## न चैतत्परिणते चारित्रपरिणामे ॥ ६६ ॥

इति ॥ न च नैव । एतदकालौत्सुक्यम् । परिणते अङ्गाङ्गीभावमागते चारित्रपरिणामे ।

कुत इत्याह ।

## तस्य प्रसन्नगम्भीरत्वात् ॥ ६७ ॥

इति ॥ तस्य चारित्रपरिणामस्य प्रसन्नत्वाच्छारदसमयसरःसलिलवत् तथा गम्भीरत्वान्महासमुद्रमध्यवत् ॥

एतदपि कथमित्याह ।

## हितावहत्वात् ॥ ६८ ॥

इति ॥ एकान्तेनैव हितकारकत्वात् । आह यदि परिणतश्चारित्रपरिणामः प्रसन्नो गम्भीरस्तथा हितावहश्च तत्कथं तैस्तैर्वचनैस्तत्प्रतिपत्तावपि साधूनामनुशासनं शास्त्रेषु निरूप्यते ।

यथा ।

गुरुकुलवासो गुरुतन्तया य उचियविणयस्स करणं च ।
वसहीपमज्जणाइसु जत्तो तह कालवेक्खाए ॥ १ ॥
अनिगूहणा बलंमी सव्वत्थ पवत्तणं च सत्तीए ।
नियलाभचिन्तणं सइ अणुग्गहो मित्ति गुरुवयणे ॥२॥
संवरनिच्छिड्डत्तं छज्जीवणरक्खणा सुपरिसुद्धं ।
विंहिसज्झाओ मरणाइवेक्खणं जइजणुवएसो ॥ ३ ॥

इत्याशङ्क्याह ।

## [1]तत्साधनानुष्ठानविषयस्तूपदेशः प्रतिपात्यसौ कर्मवैचित्र्यात् ॥ ६९ ॥

---

१ [This reading as adopted by Suali is supported by R, while the reading in the Surat edition which is supported by the commentary is चारित्रियां तत्-साधनानुष्ठान etc.]

इति ॥ चारित्रिणां परिणतचारित्राणां तस्य चारित्रपरिणामस्य साधनानि यान्यनुष्ठानानि गुरुकुलवासादीनि तानि विषयो यस्य स तथा। तुः पुनरर्थे। उपदेशः प्रवर्तकवाक्यरूपो यः शास्त्रेषु गीयते स प्रतिपाती प्रतिपतनशीलः यतोऽसौ चारित्रपरिणामो वर्तते। कुत इत्याह कर्मवैचित्र्यात् विचित्राणि हि कर्माणि ततस्तेभ्यः किं न संभाव्यते। यतः पठ्यते।

कम्माइं नूणं घणचिक्कणाइं कढिणाइं वज्जसाराइं।
णाणड्ढयं पि पुरिसं पन्थाओ उप्पहं नेन्ति ॥ १ ॥

ततः पतितोऽपि कदाचित्कस्यचिच्चारित्रपरिणामस्तथाविधाकर्षवशात्पुनरपि गुरुकुलवासादिभ्यः सम्यक्प्रयुक्तेभ्यः प्रवर्तत इति तत्साधनोपदेशो ज्यायानिति ॥

## तत्संरक्षणानुष्ठानविषयश्च चक्रादिप्रवृत्त्यवसानभ्रमाधानज्ञातात् ॥ ७० ॥

इति ॥ तस्य चारित्रपरिणामस्य लब्धस्य यत्संरक्षणं पालनं तदर्थं यदनुष्ठानं तद्विषयः। चः समुच्चये। उपदेशः

वज्जेज्जा संसग्गिं पासत्थाईहिं पावमित्तेहिं।
कुज्जाउ अप्पमत्तो सुद्धचरित्तेहिं धीरेहिं ॥ १ ॥

इत्यादिरूपो यः सः। चक्रस्य कुलालादिसंबन्धिन आदिशब्दादरघट्टयन्त्रादेश्च या प्रवृत्तिर्भ्रमणरूपा तस्या अवसाने मन्दतारूपे यद्भ्रमाधानं पुनरपि दण्डयोगेन तीव्रत्वमाधीयते

तथा चरित्रवतोऽपि जन्तोस्तथाविधवीर्यह्रासात्परिणाममन्दतायां तत्तीव्रताधानार्थमुपदेशः प्रवर्तत इति ॥

अथोपदेशनिष्फलत्वमभिधातुमाह ।

माध्यस्थ्ये तद्वैफल्यमेव ॥ ७१ ॥

इति ॥ माध्यस्थ्ये मध्यस्थभावेऽप्रवृत्तिप्रवृत्त्यवसानयोर्मध्यभागरूपे प्रवृत्तौ सत्यामित्यर्थः। तस्योपदेशस्य वैफल्यं विफलभावः ॥

कुत इत्याह ।

स्वयं भ्रमणसिद्धेः ॥ ७२ ॥

इति ॥ स्वयमात्मनैव भ्रमणसिद्धेश्चक्रभ्रमतुल्यप्रवृत्तिसिद्धेः ॥

एतदेव भावयन्नाह ।

भावयतिर्हि तथा कुशलाशयत्वादशक्तोऽसमञ्जसप्रवृत्तावितरस्यामिवेतरः ॥ ७३ ॥

इति ॥ भावयतिः परमार्थसाधुः। हिर्यस्मात्। तथा तत्प्रकारश्चारित्रवृद्धिहेतुरित्यर्थः। कुशलः परिशुद्ध आशयश्चित्तमस्य तद्भावस्तत्त्वं तस्मात्। अशक्तोऽसमर्थोऽसमञ्जसप्रवृत्तावनाचारसेवारूपायाम्। दृष्टान्तमाह इतरस्यामिव भावतः समञ्जसप्रवृत्ताविव इतरः अभावयतिर्विडम्बकप्रायः ॥

अत्रैव किंचिद्विशेषमाह ।

इति निदर्शनमात्रम् ॥ ७४ ॥

इति ॥ इत्येतत् इतरस्यामिवेतरः इति यदुक्तं तन्निदर्शनमात्रं दृष्टान्त एव केवलः ॥

अत एवाह ।

**न सर्वसाधर्म्ययोगेन ॥ ७५ ॥**

इति ॥ न नैव सर्वसाधर्म्ययोगेन सर्वैर्धर्मैः साधर्म्यं सादृश्यं तद्योगेन ॥

एतत्कुत इत्याह ।

**यतेस्तदप्रवृत्तिनिमित्तस्य गरीयस्त्वात् ॥ ७६ ॥**

इति ॥ यतेः साधोस्तत्रासमञ्जसेऽप्रवृत्तौ निमित्तस्य सम्यग्दर्शनादिपरिणामस्य गरीयस्त्वात् असमञ्जसप्रवृत्तिनिमित्तान्मिथ्यात्वादेस्तथाविधकर्मोदयजन्यात् अत एव जीवास्वभावभूतात्मकाशादतिगुरुत्वात् ॥

एतदेव भावयति ।

**वस्तुतः स्वाभाविकत्वात् ॥ ७७ ॥**

इति ॥ वस्तुतः परमार्थवृत्त्या स्वाभाविकत्वाज्जीवस्वभावमयत्वात्सम्यग्दर्शनादेः समञ्जसप्रवृत्तिनिमित्तस्य ।

तथा[१] ।

**सद्भाववृद्धेः फलोत्कर्षसाधनात् ॥ ७८ ॥**

---

१ [According to the Surat edition as also R this forms a part of the next Sūtra.]

इति॥ सद्भावस्य शुद्धरूपपरिणामरूपस्य या वृद्धिरुत्कर्षस्तस्याः फलोत्कर्षसाधनादुत्कृष्टफलरूपमोक्षनिष्पादनात्। वृद्धिप्राप्तो हि शुद्धो भावः सम्यग्दर्शनादिर्मोक्षं साधयति न तु मिथ्यात्वादिः कदाचनापि। अतः परमफलसाधकत्वेन मिथ्यात्वादिभ्योऽसौ गरीयानिति॥

एतदपि कुत इत्याह।

**उपप्लवविगमेन तथावभासनादिति[१]॥ ७९॥**

इति॥ उपप्लवविगमेन रागद्वेषाद्यान्तरोपद्रवापगमेन। तथावभासनात्तथा असमञ्जसस्याप्रवृत्तियोग्यतयावभासनात्प्रतीतेः भावयतेः कर्तुः इति इतरस्यामिवेतरः इति निदर्शनमात्रम् इति स्थितम्। इतिः वाक्यपरिसमाप्तौ॥

अथोपसंहरन्नाह।

**एवंविधयतेः प्रायो भावशुद्धेर्महात्मनः।**
**विनिवृत्ताग्रहस्योच्चैर्मोक्षतुल्यो भवोऽपि हि॥ ८०॥**

इति॥ एवंविधस्य स्वावस्थोचितानुष्ठानारम्भिणो यतेः साधोः प्रायो बाहुल्येन। भावशुद्धेः सकाशात्। महात्मन उक्तरूपस्य विनिवृत्ताग्रहस्योपरतशरीरादिगोचरमूर्छादोषस्य उच्चैरत्यर्थम् मोक्षतुल्यो निर्वाणकल्पः। भवोऽपि मोक्षस्तावन्मोक्ष एवेत्यपिशब्दार्थः। हिः स्फुटम्। यदवाचि।

निर्जितमदमदनानां वाक्कायमनोविकाररहितानाम्।
विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम्॥१॥ इति॥

---

१ B and R omit इति।

अत्रोपपत्तिमाह ।

**सद्दर्शनादिसंप्राप्तेः संतोषामृतयोगतः ।**
**भावैश्वर्यप्रधानत्वात्तदासन्नत्वतस्तथा ॥८१॥**

इति ॥ सद्दर्शनादीनामधःकृतचिन्तामणिकल्पद्रुमकामधेनूपमानानां सम्यग्दर्शनज्ञानचारित्राणां संप्राप्तेर्लाभात् संतोषामृतयोगः तस्मात् । मोक्षतुल्यो भवोऽपि हि इति संबन्धः । उपपत्त्यन्तरमाह भावैश्वर्यप्रधानत्वात् भावैश्वर्येण क्षमामार्दवादिना प्रधान उत्तमः तद्भावस्तत्त्वं तस्मात्सकाशात् । तदासन्नत्वतः मोक्षासन्नभावात् । तथा इति हेत्वन्तरसूचक इति ॥

एतदेव समर्थयन्नाह ।

**उक्तं मासादिपर्यायवृद्ध्या द्वादशभिः परम् ।**
**तेजः प्राप्नोति चारित्री सर्वदेवेभ्य उत्तमम् ॥ ८२ ॥**

इति ॥ उक्तं निरूपितं भगवत्याम् । किमित्याह मासादिपर्यायवृद्ध्या मासेन द्वाभ्यां त्रिभिरित्यादिक्रमेण पर्यायस्य वृद्धौ सत्यां यावद्द्वादशभिर्मासैः परं प्रकृष्टं तेजश्चित्तसुखलाभलक्षणं प्राप्नोत्यधिगच्छति चारित्री विशिष्टचारित्रपात्रं पुमान् । परत्वमेव व्यनक्ति । सर्वदेवेभ्यो भवनवासिप्रभृतिभ्योऽनुत्तरसुरावसानेभ्यः सकाशात् । उत्तमं सर्वसुरसुखातिशायीति भावः ॥

भगवतीसूत्रं चेदम्।

जे इमे अज्जत्ताए समणा निग्गन्था एए णं कस्स तेउलेसं विइवयन्ति। मासपरियाए समणे निग्गन्थे वाणमन्तराणं देवाणं तेउलेसं विइवयइ। एवं दुमासपरियाए समणे निग्गन्थे असुरिन्दवज्जियाणं भवणवासीणं देवाणं तेउलेसं विइवयइ, तिमासपरियाए समणे निग्गन्थे असुरिन्दाणं देवाणं तेउलेसं विइवयइ। चउमासपरियाए समणे निग्गन्थे चन्दिमसूरिमवज्जियाणं गहगणनक्खत्ततारारूवाणं जोइसियाणं तेउलेसं विइवयइ। पञ्चमासपरियाए समणे निग्गन्थे चन्दिमसूरियाणं जोइसियाणं तेउलेसं विइवयइ। छम्मासपरियाए समणे निग्गन्थे सोहम्मीसाणाणं तेउलेसं विइवयइ। सत्तमासपरियाए समणे निग्गन्थे सणंकुमारमाहिन्दाणं तेउलेसं विइवयइ। अट्ठमासपरियाए समणे निग्गन्थे बम्भलोगलन्तगदेवाणं तेउलेसं विइवयइ। नवमासपरियाए समणे निग्गन्थे महासुक्कसहस्साराणं देवाणं तेउलेसं विइवयइ। दसमासपरियाए समणे निग्गन्थे आणयपाणयआरणअच्चुयाणं देवाणं तेउलेसं विइवयइ। एक्कारसमासपरियाए समणे निग्गन्थे गेवेज्जाणं देवाणं तेउलेसं विइवयइ। बारसमासपरियाए समणे निग्गन्थे अणुत्तरोववाइयाणं देवाणं तेउलेसं विइवयइ। तेण परं सुक्के सुक्काभिजाई भवित्ता सिज्झइ बुज्झइ मुच्चइ परिणिव्वाइ सव्वदुक्खाणमन्तं करेइ त्ति॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ यतिधर्मविषयविधिः षष्ठोऽध्यायः समाप्तः॥ ६॥

# सप्तमोऽध्यायः ।

व्याख्यातः षष्ठोऽध्यायः । अथ सप्तमो व्याख्यायते । तस्य चेदमादिसूत्रम् ।

**फलप्रधान आरम्भ इति सल्लोकनीतितः ।**
**संक्षेपादुक्तमस्येदं व्यासतः पुनरुच्यते ॥ १ ॥**

इति ॥ फलं प्रधानं यस्येति स तथा आरम्भो धर्मादिगोचरा प्रवृत्तिः । इत्यस्याः सल्लोकनीतितः शिष्टजनसमाचारात् । किमित्याह संक्षेपात् परिमितरूपतया उक्तमस्य धर्मस्य इदं फलं धनदो धनार्थिनां प्रोक्त इति श्लोकेन शास्त्रादौ । व्यासतः विस्तरेण पुनरुच्यते इदमिदानीमिति ।

ननु यदि व्यासतः पुनरिदानीं वक्ष्यते तत्किमिति संक्षेपात्पूर्वं फलमुक्तमित्याशंक्याह ।

**प्रवृत्त्यङ्गमदः श्रेष्ठं सत्त्वानां प्रायशश्च यत् ।**
**आदौ सर्वत्र तद्युक्तमभिधातुमिदं पुनः ॥ २ ॥**

इति ॥ प्रवृत्त्यङ्गं प्रवृत्तिकारणमदः फलं श्रेष्ठं ज्यायः सत्त्वानां फलार्थिनां प्राणिविशेषाणां प्रायशः प्रायेण । चकारो वक्तव्यान्तरसमुच्चये । यद्यस्मादादौ प्रथमं सर्वत्र सर्वकार्येषु तत्तस्माद्युक्तमुचितमभिधातुं भणितुं संक्षेपादादाविति । आदावेव विस्तरेण फलभणने शास्त्रार्थस्यातिव्यवधानेन श्रोतुस्तत्र नीरस-

भावप्रसङ्गेनानादर एव स्यादिति । इदं पुनरिति यत्पुनर्व्यासतः फलं तदिदं वक्ष्यमाणम् ।

यथा ।

**विशिष्टं देवसौख्यं यच्छिवसौख्यं च यत्परम् ।**
**धर्मकल्पद्रुमस्येदं फलमाहुर्मनीषिणः[1] ॥ ३ ॥**

इति ॥ विशिष्टं सौधर्मादिदेवलोकसंबन्धितयाशेषदेवसौख्यातिशायि देवसौख्यं सुरशर्म यदिहैव वक्ष्यमाणं शिवसौख्यं मुक्तिशर्म । चः समुच्चये । यत् इति प्राग्वत् । परं प्रकृष्टम् । तत्किमित्याह धर्मकल्पद्रुमस्य भावधर्मकल्पपादपस्य इदं प्रतीतरूपतया प्रथमानं फलं साध्यम् आहुः उक्तवन्तो मनीषिणः सुधर्मस्वामिप्रभृतयो महामुनय इति ।

**इत्युक्तो धर्मः । सांप्रतमस्य फलमनुवर्णयिष्यामः ॥ ४ ॥**

इति ॥ सुगममेव ॥

**द्विविधं फलमनन्तरपरंपराभेदात् ॥ ५ ॥**

इति ॥ द्विविधं द्विरूपं फलं धर्मस्य । कथमित्याह अनन्तरपरंपराभेदात् आनन्तर्येण परंपरया च ॥

**तत्रानन्तरफलमुपप्लवह्रासः ॥ ६ ॥**

इति ॥ तत्र तयोर्मध्येऽनन्तरफलं दर्श्यते । तद्यथा ।

---

१ B C D R °ऊर्मचर्यः ।

उपप्लवह्रासश्च उपप्लवस्य रागद्वेषादिदोषोद्रेकलक्षणस्य ह्रासः परिहाणिः ॥

तथा ।

भावैश्वर्यवृद्धिः ॥ ७ ॥

इति ॥ भावैश्वर्यस्यौदार्यदाक्षिण्यपापजुगुप्सादिगुणभावलक्षणस्य वृद्धिरुत्कर्षः ॥

तथा ।

जनप्रियत्वम् ॥ ८ ॥

इति ॥ सर्वलोकचित्ताह्लादकत्वम् ॥

परंपराफलं तु सुगतिजन्मोत्तमस्थानपरंपरानिर्वाणावाप्तिः ॥ ९ ॥

इति ॥ यत्सुगतिजन्म यच्चोत्तमस्थानपरंपरया करणभूतया निर्वाणं तयोरवाप्तिः पुनः परंपराफलमिति ।

अथ स्वयमेवैतत्सूत्रं भावयति ।

सुगतिर्विशिष्टदेवस्थानम् ॥ १० ॥

इति ॥ सुगतिः किमुच्यत इत्याह विशिष्टदेवस्थानं सौधर्मादिकल्पलक्षणम् ॥

तत्रोत्तमा रूपसंपत् सत्स्थितिप्रभावसुखद्युतिलेश्यायोगो विशुद्धेन्द्रियावधित्वं प्रकृष्टानि भोगसाधनानि दिव्यो विमाननिवहो मनोहराण्युद्यानानि रम्या जलाशयाः कान्ता अप्सरसो-

ऽतिनिपुणाः किंकराः प्रगल्भो नाट्यविधिश्चतुरोदारा भोगाः सदा चित्ताह्लादोऽनेकसुखहेतुत्वं कुशलानुबन्धो महाकल्याणपूजाकरणं तीर्थकरसेवा सद्धर्मश्रुतौ रतिः सदा सुखित्वम् ॥ ११ ॥

इति ॥ तत्र देवस्थान उत्तमा प्रकृष्टा रूपसंपच्छरीरसंस्थानलक्षणा । सत्यः सुन्दराः याः स्थितिप्रभावसुखद्युतिलेश्याः ताभिर्योगः समागमः । तत्र स्थितिः पल्योपमसागरोपमप्रमाणायुष्कलक्षणा प्रभावो निग्रहानुग्रहसामर्थ्यं सुखं चित्तसमाधिलक्षणं द्युतिः शरीराभरणादिप्रभा लेश्यास्तेजोलेश्यादिका इति । विशुद्धानि स्वविषयाविपर्यस्तज्ञानजननेन निर्मलानीन्द्रियाण्यवधिश्च यस्य स तथा तद्भावस्तत्त्वम् । प्रकृष्टानि प्रकर्षवन्ति भोगसाधनानि भोगोपकरणानि । तान्येव दर्शयति । दिव्यो निजप्रभामण्डलविडम्बिताशेषतेजस्विचक्रः विमाननिवहो विमानसंघातः । मनोहराणि मनःप्रमोदप्रदान्यशोकचम्पकपुन्नागनागप्रभृतिवनस्पतिसमाकुलान्युद्यानानि वनानि । रम्या रन्तुं योग्या जलाशया वापीह्रदसरोवरलक्षणाः । कान्ताः कान्तिभाजोऽप्सरसो देव्यः । अतिनिपुणाः परिशुद्धविनयविधिविधायिनः किंकराः प्रतीतरूपा एव । प्रगल्भः प्रौढो नाट्यविधिस्तीर्थकरादिचरितप्रतिबद्धाभिनयलक्षणः । चतुरोदाराश्चतुरा झटित्येवेन्द्रियचित्ताक्षेपदक्षा उदाराश्चोत्तमा भोगाः शब्दादयः श्रोत्रादीन्द्रियविषयाः । सदा सततं चित्ताह्लादो मनःप्रसादरूपः । अनेकेषां स्वव्यतिरिक्तानां देवादीनां

तत्तन्नानाविधसमुचिताचारसमाचरणचातुर्यगुणेन सुखहेतुत्वं संतोषनिमित्तभावः । कुशलः परिणामसुन्दरोऽनुबन्धः सर्वकार्याणाम् । महाकल्याणकेषु जिनजन्ममहाव्रतप्रतिपत्त्यादिषु पूजायाः स्नात्रपुष्पारोपणधूपवासप्रदानादिना प्रकारेण करणं निर्मापणम् । तीर्थकराणां निजप्रभावावर्जितजगत्त्रयजन्तुमानसानाममृतमेघासाराकारसरसदेशनाविधिनिहतभव्यभविकजनमनःसंतापानां पुरुषरत्नविशेषाणां सेवा वन्दननमनपर्युपासनपूजनादिनाराधना । सतः पारमार्थिकस्य धर्मस्य श्रुतचारित्रलक्षणस्य श्रुतावाकर्णने रतिः स्वर्गप्रभवतुम्बुरुप्रभृतिगान्धर्विकारब्धपञ्चमस्वरगीतश्रवणरतेरपि सकाशादधिकसंतोषलक्षणा । सदा सर्वकालं सुखित्वं बाह्यशयनासनवस्त्रालंकारादिजनितशरीरसुखयुक्तत्वम् ।

तथा[१] ।

**तच्च्युतावपि विशिष्टे देशे विशिष्ट एव काले स्फीते महाकुले निष्कलङ्केऽन्वयेनोदग्रे सदाचारेणाख्यायिकापुरुषयुक्तेऽनेकमनोरथापूरकमत्यन्तनिरवद्यं जन्म ॥ १२ ॥**

इति ॥ तच्च्युतावपि देवलोकादवतारे किं पुनस्तत्र सुखमेवेत्यपिशब्दार्थः । विशिष्टे देशे मगधादौ । विशिष्ट एव काले सुषमदुःषमादौ । स्फीते परिवारादिस्फीतिमति

१ [According to the Surat edition and R this forms part of the following Sūtra.]

महाकुल इक्ष्वाकादौ । निष्कलङ्केऽसदाचारकलङ्कपङ्कविकले । अन्वयेन पितृपितामहादिपुरुषपरंपरया अत एवोदग्र उद्भटे । केनेत्याह सदाचारेण देवगुरुस्वजनादिसमुचितप्रतिपत्तिलक्षणेन । आख्यायिका कथा तत्प्रतिबद्धा ये पुरुषास्तथाविधान्यासाधारणाचरणगुणेन तैर्युक्ते संबद्धे । किमित्याह अनेकमनोरथापूरकं स्वजनपरजनपरिवारादिमनोभिलषितपूरणकारि । अत्यन्तनिरवद्यं शुभलग्नशुभग्रहावलोकनादिविशिष्टगुणसमन्वितेनैकान्ततो निखिलदोषविकलं जन्म प्रादुर्भाव इति ॥

तत्र च यद्भवति तदाह ।

**सुन्दरं रूपमालयो लक्षणानां रहितमामयेन युक्तं प्रज्ञया संगतं कलाकलापेन ॥ १३ ॥**

इति ॥ सुन्दरं शुभसंस्थानवत्तया रूपमाकारः । आलयो लक्षणानां चक्रवज्रस्वस्तिकमीनकलशकमलादीनाम् । रहितं परित्यक्तमामयेन ज्वरातिसारभगन्दरादिना रोगेण । युक्तं संगतं प्रज्ञया बहुबहुविधादिविशेषणग्राहिकया वस्तुबोधशक्त्या । संगतं संबद्धं कलानां लिपिशिक्षादीनां शकुनरुतपर्यवसानानां कलापेन समुदायेन ॥

तथा[1] ।

**गुणपक्षपातोऽसदाचारभीरुता कल्याणमित्रयोगः सत्कथाश्रवणं मार्गानुगो बोधः सर्वा-**

१ [According to the Surat edition and R this forms part of the following Sūtra.]

चितप्राप्तिर्हिताय सत्त्वसंघातस्य परितोषकरी गुरूणां संवर्धनी गुणान्तरस्य निदर्शनं जनानाम् अत्युदार आशयोऽसाधारणा विषया रहिताः संक्लेशेनापरोपतापिनोऽमङ्गुलावसानाः ॥ १४ ॥

इति ॥ गुणाः शिष्टचरितविशेषा असज्जनानभ्यर्थनादयः। तथा च पठन्ति।

असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः
प्रिया वृत्तिर्न्याय्या मलिनमसुभङ्गेऽप्यसुकरम्।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १ ॥

तेषां पक्षोऽभ्युपगमस्तत्र पातोऽवतार इति। अत एवासदाचारभीरुता चौर्यपारदार्याद्यनाचाराद्याधिविषयप्रदीपनकादिभ्य इव दूरं भीरुभावः। कल्याणमित्रैः सुकृतबुद्धिनिबन्धनैर्जनैर्[३]योगः संबन्धः। सतां सदाचाराणां गृहिणां यतीनां च कथाश्रवणं चरिताकर्णनम्। मार्गानुगो मुक्तिपथानुवर्ती बोधो वस्तुपरिच्छेदः। सर्वेषां धर्मार्थकामानामाराधनं प्रत्युचितानां वस्तूनां प्राप्तिर्लाभः सर्वोचितप्राप्तिः। कीदृश्यसाविति विशेषणचतुष्टयेनाह। हिताय कल्याणाय सत्त्वसंघातस्य जन्तुजातस्य परितोषकरी प्रमोददायिनी गुरूणां मातापित्रादिलोकस्य संवर्धनी वृद्धिकारिणी गुणान्तरस्य स्वपरेषां गुणविशेषस्य निदर्शनं दृष्टान्तभूमिस्तेषु तेष्वाचरणविशेषेषु

३ C R omit जनै°।

जनानां विशिष्टलोकानाम्। तथात्युदारोऽतितीव्रौदार्यवानाशयो मनःपरिणामः। असाधारणा अन्यैरसामान्याः शालिभद्रादीनामिव विषयाः शब्दादयः। रहिताः परिक्षीणाः संक्लेशेनात्यन्ताभिष्वङ्गेन। अपरोपतापिनः परोपरोधविकलाः। अमङ्गलावसानाः पथ्यान्नभोग इव सुन्दरपरिणामाः॥

तथा।

## काले धर्मप्रतिपत्तिः॥ १५॥

इति॥ काले विषयवैमुख्यलाभावसरलक्षणे धर्मप्रतिपत्तिः सर्वसावद्यव्यापारपरिहाररूपा॥

तत्र च।

## गुरुसहायसंपत्॥ १६॥

इति॥ गुर्वी सर्वदोषविकलत्वेन महती सहायानां गुरुगच्छादीनां संपत्संपत्तिः॥

ततश्च।

## साधु संयमानुष्ठानम्॥ १७॥

इति॥ साधु सर्वातिचारपरिहारतः शुद्धं संयमस्य प्राणातिपातादिपापस्थानविरमणरूपस्यानुष्ठानं करणम्॥

अतोऽपि।

## परिशुद्धाराधना॥ १८॥

इति॥ परिशुद्धा निर्मलीमसाराधना जीवितान्तसंलेखनालक्षणा॥

तत्र च ।

विधिवच्छरीरत्यागः ॥ १९ ॥

इति ॥ शास्त्रीयविधिप्रधानं यथा भवति एवं कलेवरपरिमोक्षः ॥

ततः ।

विशिष्टतरं देवस्थानम् ॥ २० ॥

इति ॥ विशिष्टतरं प्राग्लब्धदेवस्थानापेक्षया सुन्दरतरं स्थानं विमानावासलक्षणमस्य स्यात् ॥

ततः ।

सर्वमेव शुभतरं तत्र ॥ २१ ॥

इति ॥ सर्वमेव रूपसंपदादि शुभतरं प्राच्यापेक्षयातीवशुभं तत्र स्थाने ॥

परम् ।

गतिशरीरादिहीनम् ॥ २२ ॥

इति ॥ गतिर्देशान्तरसंचाररूपा शरीरं देहः । आदिशब्दात्परिवारप्रतीचारादिपरिग्रहः । तैर्हीनं तुच्छं स्यात् । उत्तरोत्तरदेवस्थानेषु पूर्वपूर्वदेवस्थानेभ्यो गत्यादीनां हीनतया शास्त्रेषु प्रतिपादनात् ॥

तथा ।

रहितमौत्सुक्यदुःखेन ॥ २३ ॥

इति ॥ त्यक्तं चित्तवाक्कायत्वराहृपया बाधया ॥

पुनरपि कीदृगित्याह ।

**अतिविशिष्टाह्लादादिमत् ॥ २४ ॥**

इति ॥ अतिविशिष्टा अत्युत्कर्षभाजो य आह्लादादय आह्लादकुशलानुबन्धमहाकल्याणपूजाकरणादयः सुकृतविशेषास्तद्युक्तम् ॥

ततः ।

**तच्च्युतावपि विशिष्टदेश इत्यादि समानं पूर्वेण ॥ २५ ॥**

इति ॥ सुगममेव नवरं पूर्वेण इति पूर्वग्रन्थेन । स च विशिष्टे देशे विशिष्ट एव काले स्फीते महाकुले इत्यादिरूप इति ॥

विशेषमाह ।

**विशिष्टतरं तु सर्वम् ॥ २६ ॥**

इति ॥ प्रागुक्तादतिविशिष्टं पुनः सर्वमत्यन्तनिरवद्यजन्मसुन्दररूपादि ॥

कुत एतदित्याह ।

**क्लिष्टकर्मविगमात् ॥ २७ ॥**

इति ॥ दौर्गत्यदौर्भाग्यदुःकुलत्वादिपर्यायवेद्यकर्मविरहात् ॥

अयमपि ।

शुभतरोदयात् ॥ २८ ॥

इति ॥ शुभतराणामतिप्रशस्तानां कर्मणां परिपाकात् ॥

असावपि ।

जीववीर्योल्लासात् ॥ २९ ॥

इति ॥ जीववीर्यस्य परिशुद्धसामर्थ्यलक्षणस्योल्लासादुद्रेकात् ॥

एषोऽपि ।

परिणतिवृद्धेः ॥ ३० ॥

इति ॥ परिणतेस्तस्य तस्य शुभाध्यवसायस्य वृद्धेरुत्कर्षात् ॥

इयमपि ।

तत्तथास्वभावत्वात् ॥ ३१ ॥

इति ॥ तस्य जीवस्य तथास्वभावत्वात्परिणतिवृद्धिस्वरूपत्वात् । परिपक्वे हि भव्यत्वे प्रतिक्षणं वर्धन्त एव जीवानां शुभतराः परिणतय इति ॥

किं च ।

प्रभूतोदाराण्यपि तस्य भोगसाधनान्ययत्नोपनतत्वात्प्रासङ्गिकत्वादभिष्वङ्गाभावात्कुत्सिताप्रवृत्तेः शुभानुबन्धित्वादुदारसुखसाधनान्येव बन्धहेतुत्वाभावेन ॥ ३२ ॥

इति ॥ प्रभूतानि प्रचुराण्युदाराण्युदग्राणि किं पुनरन्यथारूपाणीत्यपिशब्दार्थः। तस्य पूर्वोक्तजीवस्य, भोगसाधनानि पुरपरिचारान्तःपुरादीनि। उदारसुखसाधनान्येव इत्युत्तरेण योगः। कुत इत्याह अयत्नोपनतत्वात् अयत्नेनात्युद्गाढपुण्यप्रकर्षोदयपरिपाकाक्षिप्तत्वात्तथाविधपुरुषकाराभावेनोपनतत्वाड्ढौकितत्वात्। तदपि कुत इत्याह प्रासङ्गिकत्वात् कृषिकरणे पलालस्येव प्रसङ्गोत्पन्नत्वात्। एतदपि अभिष्वङ्गाभावात् भरतादीनामिव निविडगृद्ध्यभावात्। अयमपि कुत्सिताप्रवृत्तेः कुत्सितेषु नीतिमार्गोत्तीर्णेषु भोगसाधनेष्वप्रवृत्तेः। इयमपि शुभानुबन्धित्वात् मोक्षप्राप्तिनिमित्तार्यदेशदृढसंहननादिकुशलकार्यानुबन्धविधायित्वात्। किमित्याह उदारसुखसाधनान्येव उदारस्यान्यातिशायिनः सुखस्यैव शरीरचित्ताह्लादरूपस्य साधनानि जनकानि न त्विहलोकपरलोकयोरपि दुःखस्येति। अत्रैव तात्त्विकं हेतुमाह बन्धहेतुत्वाभावेन बन्धस्य कुगतिपातहेतोरशुभकर्मप्रकृतिलक्षणस्य हेतुत्वं हेतुभावः प्रक्रान्तभोगसाधनानामेव तस्याभावेन। इदमुक्तं भवति। प्रभूतोदाराण्यपि भोगसाधनानि बन्धहेतुत्वाभावादुदारसुखसाधनान्येव भवन्ति। बन्धहेतुत्वाभावश्चायत्नोपनतत्वादिका, दुत्तरोत्तरहेतुबीजभूताद्धेतुपञ्चकादिति ॥

बन्धहेतुत्वाभावमेव विशेषतो भावयन्नाह।

**अशुभपरिणाम एव हि प्रधानं बन्धकारणं तदङ्गतया तु बाह्यम् ॥ ३३ ॥**

इति ॥ अशुभपरिणाम एव हिर्यस्मात् प्रधानं मुख्यं बन्धकारणं नरकादिफलपापकर्मबन्धनिमित्तं न त्वन्यत्किंचित् । तदङ्गतया त्वशुभपरिणामकारणतया पुनर्बाह्यमन्तःपुरपुरादि बन्धकारणमिति ॥

कुत इत्याह ।

## तदभावे बाह्यादल्पबन्धभावात् ॥ ३४ ॥

इति । तदभावेऽशुभपरिणामाभावे बाह्याज्जीवहिंसादेरल्पबन्धभावात्तुच्छबन्धोत्पत्तेः ॥

एतदपि कथमित्याह ।

## वचनप्रामाण्यात् ॥ ३५ ॥

इति ॥ वचनस्यागमस्य प्रामाण्यात्प्रमाणभावात् ॥

एतदेव भावयन्नाह ।

## बाह्योपमर्देऽप्यसंज्ञिषु तथा श्रुतेः ॥ ३६ ॥

इति ॥ बाह्यः शरीरमात्रजन्यः स चासावुपमर्दश्च बहुतमजीवोपघातरूपस्तत्रापि किं पुनस्तदभाव इत्यपिशब्दार्थः । असंज्ञिषु संमूर्च्छजमहामत्स्यादिषु तथाल्पतया बन्धस्य श्रुतेः "असन्नी खलु पढमं" इत्यादेर्वचनस्य सिद्धान्ते समाकर्णनात् । तथाहि । असंज्ञिनो महामत्स्यादयो योजनसहस्रादिप्रमाणशरीराः स्वयंभूरमणमहासमुद्रमनवरतमालोडयमानाः पूर्वकोट्यादिजीविनोऽनेकसत्त्वसंघातसंहारकारिणोऽपि रत्नप्रभापृथिव्यामेवोत्कर्षतः पल्योपमासंख्येयभागजीविषु चतुर्थप्रतरवर्ति-

नरकेषु जन्म लभन्ते न परतः । तन्दुलमत्स्यस्तु बाह्योपमर्दाभावेऽपि निर्निमित्तमेवापूरितातितीव्ररौद्रध्यानोऽन्तर्मुहूर्तमायुरनुपाल्य सप्तमनरकपृथिव्यां त्रयस्त्रिंशत्सागरोपमायुर्नारक उत्पद्यत इति परिणाम एव प्रधानं बन्धकारणमिति सिद्धं भवतीति ॥

एवं सति यदन्यदपि सिद्धिमास्कन्दति तद्दर्शयति ।

## एवं परिणाम एव शुभो मोक्षकारणमपि ॥ ३७ ॥

इति ॥ एवं यथाशुभबन्धे तथा परिणाम एव शुभः सम्यग्दर्शनादिर्मोक्षकारणमपि मुक्तिहेतुरपि किं पुनर्बन्धस्येत्यपिशब्दार्थः ॥

कुत इत्याह ।

## तदभावे समग्रक्रियायोगेऽपि मोक्षासिद्धेः ॥ ३८ ॥

इति ॥ तस्य शुभपरिणामस्याभावे समग्रक्रियायोगेऽपि परिपूर्णश्रामण्योचितबाह्यानुष्ठानकलापसंभवेऽपि किं पुनस्तदभाव इत्यपिशब्दार्थः । मोक्षासिद्धेर्निर्वाणानिष्पत्तेरिति ॥

एतदपि कुत इत्याह ।

## सर्वजीवानामेवानन्तशो ग्रैवेयकोपपातश्रवणात् ॥ ३९ ॥

इति ॥ सर्वजीवानामेव सर्वेषामपि व्यवहारराशिप्राणिनामनन्तशोऽनन्तान् वारान् ग्रैवेयकेषु विमानविशेषेषूपपातस्योत्पत्तेः श्रवणाच्छास्त्रे समाकर्णनात् ॥

यदि नामैवं ततः किं सिद्धमित्याह ।

**समग्रक्रियाभावे तदप्राप्तेः ॥ ४० ॥**

इति ॥ समग्रक्रियाभावे परिपूर्णश्रामण्यानुष्ठानाभावे तदप्राप्तेर्नवमग्रैवेयकोपपाताप्राप्तेः । तथा चावाचि ।

आणोहेणाणन्ता मुक्का गेवेज्जगेसु य सरीरा ।
न य तत्थासंपुण्णाए साहुकिरियाइ उववाओ त्ति ॥ १ ॥

उपसंहरन्नाह ।

**इत्यप्रमादसुखवृद्ध्या तत्काष्ठासिद्धौ निर्वाणावाप्तिरिति ॥ ४१ ॥**

इति ॥ इत्येवमुक्तनीत्या अप्रमादसुखस्याप्रमत्ततालक्षणस्य वृद्ध्योत्कर्षेण तस्य चारित्रधर्मस्य काष्ठासिद्धौ प्रकर्षनिष्पत्तौ शैलेश्यवस्थालक्षणायां निर्वाणस्य सकलक्लेशलेशविनिर्मुक्तजीवस्वरूपलाभलक्षणस्यावाप्तिर्लाभः । इतिः परिसमाप्ताविति ॥

**यत्किंचन शुभं लोके स्थानं तत्सर्वमेव हि ।**
**अनुबन्धगुणोपेतं धर्मादाप्नोति मानवः ॥ ४२ ॥**

इति ॥ यत्किंचन सर्वमेवेत्यर्थः शुभं सुन्दरं लोके त्रिजगल्लक्षणे स्थानं शक्राद्यवस्थास्वभावं तत्सर्वमेव । हिः स्फुटम् । कीदृशमित्याह अनुबन्धगुणोपेतं जात्यस्वर्णघटितघटादिवदुत्तरोत्तरानुबन्धसमन्वितं धर्मादुक्तनिरुक्तादाप्नोति लभते मानवः पुमान् । मानवग्रहणं च तस्यैव परिपूर्णधर्मसाधनसहत्वादिति ॥

तथा ।

धर्मश्चिन्तामणिः श्रेष्ठो धर्मः कल्याणमुत्तमम् ।
हित एकान्ततो धर्मो धर्म एवामृतं परम् ॥ ४३ ॥

इति ॥ एतन्निगदसिद्धमेव । परं यत्पुनः पुनर्धर्मशब्दोपादानं तद्धर्मस्यात्यन्तादरणीयताख्यापनार्थमिति ॥

तथा ।

चतुर्दशमहारत्नसद्भोगान्नृष्वनुत्तमम् ।
चक्रवर्तिपदं प्रोक्तं धर्महेलाविजृम्भितम् ॥ ४४ ॥

इति ॥ चतुर्दशानां महारत्नानां सेनापतिगृहपतिपुरोहितगजतुरगवर्धकिस्त्रीचक्रच्छत्रचर्ममणिकाकिणीखड्गदण्डलक्षणानां सद्भोगात्परानपेक्षितया सुन्दरभोगान्नृषु[1] नरेषु मध्येऽनुत्तमं सर्वप्रधानम् । किं तदित्याह चक्रवर्तिपदं चक्रधरपदवी प्रोक्तं प्रतिपादितं सिद्धान्ते धर्महेलाविजृम्भितं धर्मलीलाविलसितमिति ॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ धर्मफलविधिः सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

---

१ B omits from सुन्दरभोगा° down to धर्महेलाविजृम्भितं ।

# अष्टमोऽध्यायः ॥

व्याख्यातः सप्तमोऽध्यायः । अधुनाष्टम आरभ्यते । तस्य चेदमादिसूत्रम् ।

किं चेह बहुनोक्तेन तीर्थकृत्त्वं जगद्धितम् ।
परिशुद्धादवाप्नोति धर्माभ्यासान्नरोत्तमः ॥ १ ॥

इति ॥ किं च इत्यभ्युच्चये । इह धर्मफलचिन्तायां बहुना प्रचुरेणोक्तेन धर्मफलेन यत्तीर्थकृत्त्वं तीर्थकरपदलक्षणं जगद्धितं जगज्जन्तुजातहिताधानकरं परिशुद्धादमलीमसादवाप्नोति लभते धर्माभ्यासात्प्रतीतरूपान्नरोत्तमः स्वभावत एव सामान्यापरपुरुषप्रधानः । तथाहि तीर्थकरपदयोग्यजन्तूनां सामान्यतोऽपि लक्षणमिदं शास्त्रेषूद्घुष्यते । यथा एते आकालं परार्थव्यसनिन उपसर्जनीकृतस्वार्था उचितक्रियावन्तोऽदीनभावाः सफलारम्भिणोऽदृढानुशयाः कृतज्ञतापतयोऽनुपहतचित्ताः देवगुरुबहुमानिनस्तथा गम्भीराशया इति ॥

ननु यदि तीर्थकृत्त्वं धर्मादवाप्नोति तथापि कथं तदेव प्रकृष्टं धर्मफलमिति ज्ञातुं शक्यमित्याह ॥

नातः परं जगत्यस्मिन्विद्यते स्थानमुत्तमम् ।
तीर्थकृत्त्वं यथा सम्यक् स्वपरार्थप्रसाधकम् ॥ २ ॥

इति ॥ न नैवातस्तीर्थकृत्त्वात्परमन्यज्जगत्यस्मिन्नुपलभ्यमानचराचरस्वभावे विद्यते समस्ति स्थानं पदमुत्तमं प्रकृष्टं तीर्थ-

त्त्वमुक्तरूपं यथा येन प्रकारेण सम्यग्यथावत् स्वपरार्थप्रसाधकं स्वपरप्रयोजननिष्पादकम् ॥

एतदेव भावयति ॥

**पञ्चस्वपि महाकल्याणेषु त्रैलोक्यशङ्करम् ।**
**तथैव स्वार्थसंसिद्ध्या परं निर्वाणकारणम् ॥ ३ ॥**

इति ॥ पञ्चस्वपि न पुनरेकस्मिन्नेव क्वचिन्महाकल्याणेषु गर्भाधानजन्मदिनादिषु त्रैलोक्यशङ्करं जगत्त्रयसुखकारि। तीर्थकृत्त्वम् इत्यनुवर्तते। इत्थं परार्थसाधकत्वमुक्त्वा स्वार्थसाधकत्वमाह। तथैव त्रैलोक्यसुखकरणप्रकारेण स्वार्थसंसिद्ध्या क्षायिकसम्यग्दर्शनज्ञानचारित्रनिष्पत्त्या परं प्रधानं निर्वाणकारणं मुक्तिहेतुरिति ॥

**इत्युक्तप्रायं धर्मफलम्। इदानीं तच्छेषमेवोदग्रमनुवर्णयिष्यामः ॥ ४ ॥**

इति ॥ सुगममेव। परं तच्छेषम् इति धर्मफलशेषम्।

एतदेव दर्शयति ॥

**तच्च सुखपरंपरया प्रकृष्टभावशुद्धेः सामान्यचरमजन्म तथा तीर्थकृत्त्वं च ॥ ५ ॥**

इति ॥ तच्च तत्पुनर्धर्मफलशेषमुदग्रं परंपरयोत्तरोत्तरक्रमेण प्रकृष्टभावशुद्धेः सकाशात्। किमित्याह सामान्यचरमजन्म सामान्यं तीर्थकरातीर्थकरयोः समानं चरमजन्म अपश्चिम-

देहलाभलक्षणम्। तथा इति पक्षान्तरोपक्षेपे। तीर्थकरत्वं तीर्थंकरभावलक्षणम्। चः समुच्चये॥

**तत्राक्लिष्टमनुत्तरं विषयसौख्यं हीनभावविगम उदग्रतरा संपत् प्रभूतोपकारकरणम् आशयविशुद्धिर्धर्मप्रधानता अवन्ध्यक्रियात्वम्॥ ६॥**

इति॥ तत्र सामान्यतस्त्वमरमजन्मनि। अक्लिष्टं परिणामसुन्दरमनुत्तरं शेषभोगसौख्येभ्यः प्रधानं विषयसौख्यं शब्दादिसेवालक्षणम्। हीनभावविगमो जातिकुलविभववयोवस्थादिन्यूनतारूपहीनत्वविरहः। उदग्रतरा प्राग्भवेभ्योऽत्यन्तोच्चा संपद् द्विपदचतुष्पदादिसमृद्धिः। तस्यां च प्रभूतस्यातिभूयिष्ठस्योपकारस्य स्वपरगतस्य करणं विधानम्। अत एवाशयस्य चित्तस्य विशुद्धिरमालिन्यरूपा। धर्मप्रधानता धर्मैकसारत्वम्। अतिनिपुणविवेकवशोपलब्धयथावस्थितसमस्तवस्तुतत्त्वतया अवन्ध्या अनिष्फला क्रिया धर्मार्थाद्याराधनरूपा यस्य तद्भावस्तत्त्वम्॥

तथा।

**विशुद्ध्यमानाप्रतिपातिचरणावाप्तिः तत्सात्म्यभावो भव्यप्रमोदहेतुता ध्यानसुखयोगोऽतिशयर्द्धिप्राप्तिः॥ ७॥**

इति॥ विशुद्ध्यमानस्य संक्लिश्यमानविलक्षणतया अप्रतिपातिनः कदाचिदप्यभ्रंशभाजः चरणस्य चारित्रस्यावाप्तिर्लाभः।

तपश्च तेन विशुद्ध्यमानाप्रतिपातिना चरणेन सात्म्यं समानात्मता तत्सात्म्यं तेन सहैकीभाव इत्यर्थः तेन भावो भवनं परिणतिरिति । भव्यप्रमोदहेतुता भव्यजनसंतोषकारित्वम् । ध्यानसुखयोगो ध्यानसुखस्याशेषसुखातिशायिनश्चित्तनिरोधलक्षणस्य योगः । अतिशयर्द्धिप्राप्तिरतिशयर्द्धेरामर्षौषध्यादिरूपायाः प्राप्तिः ॥

ततश्च कालेन ।

**अपूर्वकरणं क्षपकश्रेणिर्मोहसागरोत्तारः केवलाभिव्यक्तिः परमसुखलाभः[1] ॥ ८ ॥**

इति ॥ अपूर्वाणां स्थितिघातरसघातगुणश्रेणिगुणसंक्रमापूर्वस्थितिबन्धलक्षणानां पञ्चानामर्थानां प्राच्यगुणस्थानेष्वप्राप्तानां करणं यत्र तदपूर्वकरणमष्टमगुणस्थानकम् । ततश्च क्षपकस्य घातिकर्मप्रकृतिक्षयकारिणो यतेः श्रेणिर्मोहनीयादिप्रकृतिक्षयक्रमरूपा संपद्यते । क्षपकश्रेणिक्रमश्चायम् । इह परिपक्वसम्यग्दर्शनादिगुणो जीवश्चरमवर्त्यविरतदेशविरतप्रमत्ताप्रमत्तसंयतान्यतरगुणस्थानकस्थः प्रवृद्धतीव्रशुद्धध्यानाधीनमानसः क्षपकश्रेणिमारुरुक्षुरपूर्वगुणस्थानकमवाप्य प्रथमतश्चतुरोऽनन्तानुबन्धिनः क्रोधादीन् युगपत्क्षपयितुमारभते । ततः सावशेषेष्वेतेषु मिथ्यात्वं क्षपयितुमुपक्रमते । ततस्तदवशेषे मिथ्यात्वे च क्षीणे सम्यग्मिथ्यात्वं सम्यक्त्वं च क्रमेणोच्छिनत्ति । तदनन्तरमेवाबद्धायुष्कोऽनिवृत्तिकरणं नाम सकलमोहापोहैकसहं नवमगुणस्थानकमध्यारोहति । तत्र च तथैव प्रतिक्षणं विशुद्ध्यमानः

१ B C R परमसुखभावः ।

"कियत्स्वपि संख्यातेषु भागेषु गतेष्वष्टौ कषायानप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्ञितान् क्रोधादीनेव क्षपयितुमारभते। क्षीयमाणेषु च तेष्वेताः षोडशप्रकृतीरध्यवसायविशेषान् निद्रानिद्रा-१-प्रचलाप्रचला-२-स्त्यानगृद्धि-३-नरकगति-४-नरकानुपूर्वी-५-तिर्यग्गति-६-तिर्यगानुपूर्व्यै-७-केन्द्रिय-८-द्वीन्द्रिय-९-त्रीन्द्रिय-१०-चतुरिन्द्रियजातिनामा-११-तपनामो-१२-द्द्योतनाम-१३-साधारणनाम-१४-स्थावरनाम-१५-सूक्ष्मनाम-१६-लक्षणाः क्षपयति। ततोऽष्टकषायावशेषक्षये यदि पुरुषः प्रतिपत्ता ततो नपुंसकवेदं ततः स्त्रीवेदं ततो हास्यादिषट्कं ततः पुनः पुरुषवेदं क्षपयति। यदि पुनर्नपुंसकं स्त्री वा तदा पुरुषवेदस्थाने स्ववेदमितरवेदद्वयं च यथाजघन्यप्रथमतया क्षपयति। ततः क्रमेण क्रोधादीन्संज्वलनान् स्त्रीन्। अतो बादरलोभं चाचैव क्षपयित्वा सूक्ष्मसंपरायगुणस्थाने च सूक्ष्मं सर्वथा विनिहत्तसकलमोहविकारां क्षीणमोहगुणस्थानावस्थां संश्रयते। तत्र च समुद्रप्रतरणश्रान्तपुरुषवत्संग्रामाङ्गणविनिर्गतपुरुषवद्वा मोहनिग्रहनिश्चलनिबद्धाध्यवसायतया परिश्रान्तः सन्नन्तर्मुहूर्तं विश्रम्य तद्गुणस्थानकद्विचरमसमये निद्राप्रचले चरमसमये च ज्ञानावरणान्तरायप्रकृतिदशकं दर्शनावरणावशिष्टं प्रकृतिचतुष्कं च युगपदेव क्षपयति। बद्धायुः पुनः सप्तकक्षयानन्तरं विश्रम्य यथानिबद्धं चायुरनुभूय भवान्तरे क्षपकश्रेणिं समर्थयत इति।" यच्चात्रापूर्वकरणोपन्यासानन्तरं क्षपकश्रेणेरुपन्यासः स सैद्धान्तिकपक्षापेक्षया यतो दर्शनमोहसप्तकस्यापूर्वकरणस्थ एव

स्वयं करोतीति तन्मतं न तु यथा कार्मग्रन्थिकाभिप्रायेणाविरतसम्यग्दृष्ट्याद्यन्यतरगुणस्थानकचतुष्टयस्य इति ॥

ततो मोहसागरोत्तारो मोहो मिथ्यात्वमोहादिः स एव सागरः स्वयंभूरमणादिपारावारो मोहसागरस्तस्मादुत्तारः परपारप्राप्तिः । ततः केवलाभिव्यक्तिः केवलस्य केवलज्ञानकेवलदर्शनलक्षणस्य जीवगुणस्य ज्ञानावरणादिघातिकर्मोपरतावभिव्यक्तिराविर्भावः । ततः परमसुखलाभः परमस्य प्रकृष्टस्य देवादिसुखातिशायिनः सुखस्य लाभः प्राप्तिः । उक्तं च ।

यच्च कामसुखं लोके यच्च दिव्यं महासुखम् ।
वीतरागसुखस्येदमनन्तांशे न वर्तते ॥ इति ॥

अत्रैव हेतुमाह ।

## सदारोग्याप्तेः ॥ ९ ॥

इति ॥ सदारोग्यस्य भावारोग्यरूपस्याप्तेर्लाभात् ॥

इयमपि कुत इत्याह ।

## भावसंनिपातक्षयात् ॥ १० ॥

इति ॥ भावसंनिपातस्य पारमार्थिकरोगविशेषस्य क्षयादुच्छेदात् ॥

संनिपातमेव व्याचष्टे ।

रागद्वेषमोहा हि[१] दोषास्तथा तथात्मदूषणात्
॥ ११ ॥

इति ॥ रागद्वेषमोहाः वक्ष्यमाणलक्षणाः । हिः स्फुटम् । दोषा भावसंनिपातरूपाः । अत्र हेतुमाह । तथा तथा तेन तेन प्रकारेणाभिष्वङ्गकरणादिनात्मनो जीवस्य दूषणाद्विकारप्रापणात् ॥

तत्त्वभेदपर्यायैर्व्याख्या इति न्यायाद्रागादीनेव तत्त्वत आह ।

अविषयेऽभिषङ्गकरणाद्रागः ॥ १२ ॥

इति ॥ अविषये प्रकृतिविशरारुतया मतिमतामभिष्वङ्गानर्हे स्त्र्यादौ वस्तुन्यभिष्वङ्गकरणाच्चित्तप्रतिबन्धसंपादनात् । किमित्याह रागः दोषः ॥

तत्रैवाग्निज्वालाकल्पमात्सर्यापादनाद्द्वेषः ॥ १३ ॥

इति ॥ तत्रैव क्वचिदर्थेऽभिष्वङ्गे सत्यग्निज्वालाकल्पस्य सम्यक्त्वादिगुणसर्वस्वदाहकतया मात्सर्यस्य परसंपत्त्यसहिष्णुभावलक्षणस्यापादनाद्विधानाद्द्वेषो दोषः ॥

हेयेतरभावाधिगमप्रतिबन्धविधानान्मोहः ॥ १४ ॥

इति ॥ इह निश्चयनयेन हेयानां मिथ्यात्वादीनामितरेषां चोपादेयानां सम्यग्दर्शनादीनां भावानां व्यवहारतस्तु विष-

---

१ B reads रागद्वेषमोहादिदोषमोहादिदोषा°, C R read रागद्वेषमोहादिदोषा° ।

कण्टकादीनां स्रक्चन्दनादीनां च अधिगमस्यावबोधस्य प्रतिबन्धविधानात्स्खलनकरणान्मोहो दोषः ॥

अथैतेषां भावसंनिपातत्वं समर्थयन्नाह ।

## सत्स्वेतेषु न यथावस्थितं सुखं स्वधातुवैषम्यात् ॥ १५ ॥

इति ॥ सत्स्वेतेषु रागादिषु न नैव यथावस्थितं पारमार्थिकं सुखं जीवस्य । अत्र हेतुः स्वधातुवैषम्यात् । दधति धारयन्ति जीवस्वरूपमिति धातवः सम्यग्दर्शनादयो गुणाः । स्वस्यात्मनो धातवः तेषां वैषम्याद्यथावस्थितवस्तुस्वरूपपरिहारेणान्यथारूपतया भवनं तस्मात् । यथा हि वातादिदोषोपघाताद्धातुषु रसासृगादिषु वैषम्यापन्नेषु न देहिनो यथावस्थितं कामभोगजं मनःसमाधिजं वा शर्म किंचन लभन्ते तथा अमी संसारिणः सत्त्वा रागादिदोषवशात्सम्यग्दर्शनादिषु मलीमसरूपतां प्राप्तेषु न रागद्वेषमोहोपशमजं शर्म समासादयन्तीति ॥

अमुमेवार्थं व्यतिरेकत आह ।

## क्षीणेषु न दुःखं निमित्ताभावात् ॥ १६ ॥

इति ॥ क्षीणेषु रागादिषु न दुःखं भावसंनिपातजं समुत्पद्यते । कुत इति चेदुच्यते निमित्ताभावात् निबन्धनविरहादिति ॥

तर्हि किं स्यादित्याह ।

**आत्यन्तिकभावरोगविगमात्परमेश्वरताप्तेस्तत्तथास्वभावत्वात्परमसुखभाव इति ॥ १७ ॥**

इति ॥ आत्यन्तिकः पुनर्भावाभावेन भावरोगाणां रागादीनां यो विगमः समुच्छेदः तस्मात् । या परमेश्वरतायाः शक्रचक्राधिपाद्यैश्वर्यातिशायिन्याः केवलज्ञानादिलक्षणाया आप्तिः प्राप्तिः तस्याः । परमसुखभावः इत्युत्तरेण योगः । कुत इत्याह तत्तथास्वभावत्वात् तस्य परमसुखलाभस्य तथास्वभावत्वात्परमेश्वरतारूपत्वात्परमसुखभावः संपद्यते । इतिः वाक्यपरिसमाप्ताविति ॥

इत्थं तीर्थकरातीर्थकरयोः सामान्यमनुत्तरं धर्मफलमभिधाय सांप्रतं तीर्थकृत्त्वलक्षणं तदभिधातुमाह ।

**देवेन्द्रहर्षजननम् ॥ १८ ॥**

इति ॥ देवेन्द्राणां चरमचक्रशक्रादीनां हर्षस्य संतोषस्य जननं संपादनमिति ॥

तथा ।

**पूजानुग्रहाङ्गता ॥ १९ ॥**

इति ॥ पूजया जन्मकालादारभ्यानिर्वाणाप्तेस्तत्तन्निमित्तेन निष्पादितया अमरगिरिशिखरमज्जनादिरूपया योऽनुग्रहो निर्वाणबीजलाभभूतो जगत्त्रयस्याप्युपकारः तस्याङ्गता कारणभावः । भगवतो हि प्रतीत्य तत्तन्निष्पन्नमाया भक्तिभरनिर्भरा-

मरप्रभुप्रभृतिप्रभूतसत्त्वसंपादितायाः पूजायाः सकाशाद्भूयसां भव्यानां मोक्षानुगुणो महानुपकारः संपद्यत इति ॥

तथा ।

## प्रातिहार्योपयोगः ॥ २० ॥

इति ॥ प्रतिहारकर्म प्रातिहार्यम् । तच्चाशोकवृक्षादि । यदवाचि ।

> अशोकवृक्षः सुरपुष्पवृष्टि
> र्दिव्यो ध्वनिश्चामरमासनं च ।
> भामण्डलं दुन्दुभिरातपत्रं
> सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ १ ॥

तस्योपयोग उपजीवनमिति ॥

ततः ।

## परं परार्थकरणम् ॥ २१ ॥

इति ॥ परं प्रकृष्टं परार्थस्य परप्रयोजनस्य सर्वसत्त्वस्वभाषापरिणामिन्या पीयूषपानसमधिकानन्ददायिन्या सर्वतोऽपि योजनमानभूमिभागयायिन्या वाण्या अन्यैश्च तैस्तैश्चित्रैरुपायैः करणं निष्पादनमिति ॥

एतदेव अविच्छेदेन इत्यादिनेति परं परार्थकरणं एतदन्तेन सूत्रकदम्बकेन स्फुटीकुर्वन्नाह ।

**अविच्छेदेन भूयसां मोहान्धकारापनयनं हृद्यैर्वचनभानुभिः ॥ २२ ॥**

इति ॥ अविच्छेदेन यावज्जीवमपि भूयसामनेकलक्षकोटिप्रमाणानां भव्यजन्तूनां मोहान्धकारस्याज्ञानान्धतमसस्यापनयनमपसारो हृद्यैर्हृदयंगमैर्वचनभानुभिर्वाक्यकिरणैः ॥

मोहान्धकारे चापनीते यत्स्यात्प्राणिनां तदाह ।

सूक्ष्मभावप्रतिपत्तिः ॥ २३ ॥

इति ॥ सूक्ष्माणामनिपुणबुद्धिभिरगम्यानां भावानां जीवादीनां प्रतिपत्तिरवबोधः ॥

ततः ।

श्रद्धामृतास्वादनम् ॥ २४ ॥

इति ॥ सूक्ष्मभावेष्वेव या श्रद्धा रुचिः सैवामृतं त्रिदशभोजनं तस्यास्वादनं हृदयजिह्वया समुपजीवनमिति ॥

ततः ।

सदनुष्ठानयोगः[१] ॥ २५ ॥

इति ॥ सदनुष्ठानस्य साधुचेष्टस्यधर्माभ्यासरूपस्य योगः संबन्धः ॥

ततः ।

परमापायहानिः ॥ २६ ॥

इति ॥ परमा प्रकृष्टा अपायहानिर्नारकादिकुगतिप्रवेशलभ्यानर्थसार्थोच्छेदः ॥

---

१ B omits the Sūtra.

ततोऽप्युपक्रियमाणभव्यप्राणिनां यत्स्यात्तदाह ।

**सानुबन्धसुखभाव उत्तरोत्तरः प्रकामप्रभूतसत्त्वोपकारायावन्ध्यकारणं निर्वृतेः ॥ २७ ॥**

इति ॥ सानुबन्धसुखभाव उत्तरोत्तर उत्तरेषु प्रधानेषूत्तरः प्रधानः प्रकामः प्रौढः प्रभूतोऽतिबहुर्यः सत्त्वोपकारः तस्मै संपद्यते स चावन्ध्यकारणमवन्ध्यो हेतुर्निर्वृतेर्निर्वाणस्य ॥

निगमयन्नाह ।

**इति परं परार्थकरणम् ॥ २८ ॥**

इति ॥ इत्येवं यथा प्रागुक्तं परं परार्थकरणं तस्य भगवत इति ॥

सांप्रतं पुनरप्युभयोः साधारणं धर्मफलमाह ।

**भवोपग्राहिकर्मविगमः ॥ २९ ॥**

इति ॥ परिपालितपूर्वकोट्यादिप्रमाणसयोगकेवलिपर्याययोरन्ते भवोपग्राहिकर्मणां वेदनीयायुर्नामगोत्ररूपाणां विगमो नाशो जायते ॥

ततः ।

**निर्वाणगमनम् ॥ ३० ॥**

इति ॥ निर्वान्ति देहिनोऽस्मिन्निति निर्वाणं सिद्धिक्षेत्रं जीवस्यैव स्वरूपावस्थानं वा । तत्र गमनमवतारः ॥

तत्र च ।

**पुनर्जन्माद्यभावः ॥ ३१ ॥**

इति ॥ पुनर्द्वितीयतृतीयादिवारं यज्जन्मादीनां जन्मजरामरणप्रभृतीनामनर्थानामभाव आत्यन्तिकोच्छेदः ॥

अत्र हेतुः ।

बीजाभावतोऽयम् ॥ ३२ ॥

इति ॥ बीजस्यानन्तरमेव वक्ष्यमाणस्याभावादयं पुनर्जन्माद्यभाव इति ॥

बीजमेव व्याचष्टे ।

कर्मविपाकस्तत् ॥ ३३ ॥

इति ॥ कर्मणां ज्ञानावरणादीनां विपाक उदयस्तत्पुनर्जन्मादिबीजमिति ।

न च वक्तव्यम् एषोऽपि निर्वाणगतो जीवः सकर्मा भविष्यतीत्याह ॥

अकर्मा चासौ ॥ ३४ ॥

इति ॥ अकर्मा च कर्मविकलश्चासौ निर्वाणशरणो जीवः । भवतु नामाकर्मा तथापि पुनर्जन्माद्यस्य भविष्यतीत्याह ॥

तद्वत एव तद्ग्रहः[1] ॥ ३५ ॥

इति ॥ तद्वत एव कर्मवत एव तद्ग्रहः पुनर्जन्मादिलाभः । ननु क्रियमाणत्वेन कर्मण आदिमत्त्वप्रसङ्गेन कथं सर्वकालं कर्मवत एव तद्ग्रह इत्याशंक्याह ।

---

१ B R omit तद्; C omits the Sūtra.

## तद्गनादित्वेन तथाभावसिद्धेः ॥ ३६ ॥

इति ॥ तस्य कर्मणः कृतकत्वेनाप्यनादित्वेन द्वितीयाध्यायप्रपञ्चितयुक्त्या तथाभावस्य तद्गत एव, तद्ग्रहरूपस्य सिद्धेर्निष्पत्तेरिति।

ननु

ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम्।
गत्वा गच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥ १ ॥

इति वचनप्रामाण्यात्कथं नाकर्मणोऽपि जन्मादिग्रह इत्याशंक्याह ॥

## सर्वविप्रमुक्तस्य तु तथास्वभावत्वान्निष्ठितार्थत्वान्न तद्ग्रहणे निमित्तम् ॥ ३७ ॥

इति ॥ सर्वेण कर्मणा विप्रमुक्तस्य पुनस्तथास्वभावत्वात्तत्प्रकाररूपत्वात्। किमित्याह निष्ठितार्थत्वात् निष्पन्ननिःशेषप्रयोजनत्वाद्धेतोः न नैव तद्ग्रहणे जन्मादिग्रहणे निमित्तं हेतुः समस्तीति। अयमभिप्रायः। यो हि सर्वैः कर्मभिः सर्वथापि विप्रमुक्तो भवति न तस्य जन्मादिग्रहणे किंचिन्निमित्तं समस्ति निष्ठितार्थत्वेन जन्मादिग्राहकस्वभावाभावात्। यश्च तीर्थनिकारलक्षणो हेतुः कैश्चित्परिकल्प्यते सोऽप्यनुपपन्नः कषायविकारजन्यत्वात्तस्येति ॥

एवं च सति यत्सिद्धं तदाह।

## नाजन्मनो जरा ॥ ३८ ॥

इति ॥ न नैवाजन्मन उत्पादविकलस्य जरा वयोहानिलक्षणा संपद्यते ॥

एवं च ।

न मरणभयशक्तिः ॥ ३९ ॥

इति ॥ न इति प्रतिषेधे । मरणभयस्य प्रतीतरूपस्य संबन्धिनी शक्तिर्बीजरूपेति ॥

तथा ।

न चान्य उपद्रवः ॥ ४० ॥

इति ॥ न च नैवान्यस्तृष्णाबुभुक्षादिरुपद्रवो व्यसनम् । तर्हि किं तत्र स्यादित्याशंक्याह ॥

विशुद्धस्वरूपलाभः ॥ ४१ ॥

इति ॥ विशुद्धं निर्मलीमसं यत्स्वरूपं तस्य लाभः प्राप्तिः ॥

तथा ।

आत्यन्तिकी व्याबाधानिवृत्तिः ॥ ४२ ॥

इति ॥ अत्यन्तं भवा आत्यन्तिकी व्याबाधानिवृत्तिः शारीरमानसव्यथाविरहः ॥

तामेव विशिनष्टि ।

सा निरुपमं सुखम् ॥ ४३ ॥

इति॥ सा आत्यन्तिकी व्याबाधानिवृत्तिः निरुपमसुपमानातीतं सुखम्॥

अत्र हेतुः।

सर्वत्राप्रवृत्तेः[१]॥ ४४॥

इति॥ सर्वत्र हेय उपादेये च वस्तुन्यप्रवृत्तेरव्यापारणात्॥

इयमपि कथमित्याह।

समाप्तकार्यत्वात्॥ ४५॥

इति॥ समाप्तानि निष्ठितानि कार्याणि यस्य स तथा तद्भावस्तत्त्वं तस्मात्॥

अत्रैवाभ्युच्चयमाह।

न चैतस्य क्वचिदौत्सुक्यम्॥ ४६॥

इति॥ न नैव। चः समुच्चये। एतस्य निर्वृतस्य जन्तोः क्वचिदर्थे औत्सुक्यं कांक्षारूपम्॥

ननु किमेतन्निषिध्यत इत्याह।

दुःखं चैतत्स्वास्थ्यविनाशनेन॥ ४७॥

इति॥ दुःखं पुनरेतदौत्सुक्यम्। कथमित्याह स्वास्थ्यविनाशनेन स्वास्थ्यस्य सर्वसुखमूलस्यापनयनेन॥

---

१ B C R add हेतुः।

यदि नामौत्सुक्यात्स्वास्थ्यविनाशः तथापि कथमस्य दुःखरूपतेत्याशंक्याह ।

दुःखशक्त्युद्रेकतोऽस्वास्थ्यसिद्धेः ॥ ४८ ॥

इति ॥ दुःखशक्तेर्दुःखबीजरूपाया उद्रेकत उद्भवात्मकाशादस्वास्थ्यस्य स्वात्मन्येव।स्वस्थतारूपस्य सिद्धेः संभवात् ॥

अस्वास्थ्यसिद्धिरपि कथं गम्येत्याह ।

अहितप्रवृत्त्या ॥ ४९ ॥

इति ॥ अहितप्रवृत्त्याहितेषु दुःखशक्त्युद्रेकवशसंजातास्वास्थ्यनिर्वर्तकेषु वस्तुषु मनःप्रीतिप्रदप्रमदादिषु प्रवृत्त्या चेष्टनेन ॥

अथ स्वास्थ्यस्वरूपमाह ।

स्वास्थ्यं तु निरुत्सुकतया प्रवृत्तेः ॥ ५० ॥

इति ॥ स्वास्थ्यमस्वास्थ्यविलक्षणं पुनर्निरुत्सुकतयौत्सुक्यपरिहारेण प्रवृत्तेः सर्वकृत्येषु ॥

एवं च सति यत्सिद्धं तदाह ।

परमस्वास्थ्यहेतुत्वात्परमार्थतः स्वास्थ्यमेव ॥ ५१ ॥

इति ॥ परमस्वास्थ्यहेतुत्वाच्चित्तविप्लवपरिहारेण प्रकृष्टस्वावस्थाननिमित्तत्वात् परमार्थतस्तत्त्ववृत्त्या स्वास्थ्यमेव निरुत्सुक-

तथा प्रवृत्तिरिति संबध्यते । सा च भगवति केवलिनि समस्तीति सिद्धं यदुत न तस्य क्वचिदौत्सुक्यमिति ।

ननु भवेऽपवर्गे चैकान्ततो निःस्पृहस्य कथं विहितेतरयोरर्थयोरस्य प्रवृत्तिनिवृत्ती स्यातामिति । उच्यते । दृश्यत एव पूर्वसंस्कारवशात्कुलालचक्रभ्रमवत्स्याताम ॥

एतद्भावयन्नाह ।

**भावसारे हि प्रवृत्त्यप्रवृत्ती सर्वत्र प्रधानो व्यवहारः[1] ॥ ५२ ॥**

इति ॥ भावसारे मानसविकल्पपुरःसरे । हिशब्दः पूर्वोक्तभावनार्थः । प्रवृत्त्यप्रवृत्ती सर्वत्र विहितेतरयोरर्थयोर्विषये । किमित्याह प्रधानो भावरूपो व्यवहारो लोकाचाररूपः । इदमुक्तं भवति । यैव मनःप्रणिधानपूर्विका क्वचिदर्थे प्रवृत्तिर्निवृत्तिर्वा तामेव तात्त्विकीं तत्त्ववेदिनो वदन्ति, न पुनरन्याम् । यतोऽनाभोगादिभिः परिपूर्णश्रामण्यक्रियावन्तोऽप्यभव्यादयो न तात्त्विकश्रामण्यक्रियावत्तया समये व्यवहृताः । तथा संमूर्छनजमत्स्यादयः सप्तमनरकपृथिवीप्रायोग्यायुर्बन्धनिमित्तमहारम्भादिपापस्थानवर्तिनोऽपि तथाविधभावविकलत्वान्न तदायुर्बन्धं प्रति प्रत्यलीभवन्ति । एवं सयोगकेवलिनोऽपि सर्वत्र निःस्पृहमनसः पूर्वसंस्काराद्विहितेतरयोरर्थयोः प्रवृत्तिनिवृत्ती कुर्वन्तोऽपि न भावतस्तद्वन्तो व्यवह्रियन्त इति ॥

१ B omits this sūtra.

अत्रैवाभ्युच्चयमाह।

प्रतीतिसिद्धश्चायं सद्योगसचेतसाम् ॥ ५३ ॥

इति ॥ प्रतीतिसिद्धः स्वानुभवसंवेदितः। चः समुच्चये। अयं पूर्वोक्तार्थः। सद्योगेन शुद्धध्यानलक्षणेन ये सचेतसः सचित्तास्तेषाम्। संपन्नध्यानरूपामलमानसा महामुनयः स्वयमेवामुमर्थं प्रतिपद्यन्ते न पुनरत्र परोपदेशमाकांक्षन्त इति ॥

– अथ प्रस्तुतमाह।

सुस्वास्थ्यं च परमानन्दः ॥ ५४ ॥

इति ॥ निरुत्सुकप्रवृत्तिसाध्यस्वास्थ्याद् यदधिकं स्वास्थ्यं तत्सुस्वास्थ्यमुच्यते तदेव परमानन्दो मोक्षसुखलक्षणः ॥

कुत इत्याह।

तदन्यनिरपेक्षत्वात् ॥ ५५ ॥

इति ॥ तस्मादात्मनः सकाशादन्यस्तदन्यः स्वव्यतिरिक्तस्तन्निरपेक्षत्वात् ॥

15 नन्वन्यापेक्षा किं दुःखरूपा यदेवमुच्यत इत्याह।

अपेक्षाया दुःखरूपत्वात् ॥ ५६ ॥

इति ॥ प्रतीतार्थमेव ॥

एतदेव भावयति।

**अर्थान्तरप्राप्त्या हि तन्निवृत्तिर्दुःखत्वेनानिवृत्तिरेव[१] ॥ ५७ ॥**

इति ॥ अर्थान्तरस्येन्द्रियार्थरूपस्य प्राप्त्या लाभेन । हिर्यस्मात् । तन्निवृत्तिः । किमित्याह दुःखत्वेन अर्थान्तरप्राप्तेः अनिवृत्तिरेव दुःखस्येति ॥

अथैनां निर्वृतौ निराकुर्वन्नाह ।

**न चास्यार्थान्तरावाप्तिः ॥ ५८ ॥**

इति ॥ न च न पुनरस्य सिद्धार्थस्यार्थान्तरावाप्तिः स्वव्यतिरिक्तभावान्तरसंबन्धः ॥

एतदेव भावयति ।

**स्वस्वभावनियतो ह्यसौ विनिवृत्तेच्छाप्रपञ्चः ॥ ५९ ॥**

इति ॥ स्वस्वभावनियतः स्वकीयस्वरूपमात्रप्रतिष्ठितः । हिर्यस्मात् । असौ भगवान् सिद्धो विनिवृत्तेच्छाप्रपञ्चोऽत्यन्तनिवृत्तसर्वार्थगोचरस्पृहाप्रबन्धः ॥

लोकाग्रेनापि सह तस्य संबन्धं निराकुर्वन्नाह ।

**अतोऽकामत्वात्तत्स्वभावत्वान्न लोकान्तस्थेचाप्तिःराप्तिः[२] ॥ ६० ॥**

१ C R read तन्निवृत्तिर्दुःखत्वेनानुवृत्तिरिति ।
२ C omits °राप्तिः ।

इति ॥ अतो विनिवृत्तेच्छाप्रपञ्चत्वाद्यदकामत्वं निरभिलाषत्वं तस्मात्। यत्तत्स्वभावत्वमर्थान्तरनिरपेक्षत्वं तस्माच्च लोकान्तक्षेत्राप्तिः सिद्धिक्षेत्रावस्थानरूपा प्राप्तिरर्थान्तरेण सह संबन्धः ॥

एतदपि भावयति।

**औत्सुक्यवृद्धिर्हि[१] लक्षणमस्या हानिश्च समयान्तरे ॥ ६१ ॥**

इति ॥ औत्सुक्यस्य वृद्धिः प्रकर्षः। हिर्यस्मात्। लक्षणं स्वरूपमस्या अर्थान्तरप्राप्तेः। हानिश्चौत्सुक्यस्यैव भ्रंशः समयान्तरे प्राप्तिसमयादपेतनसमयलक्षणे ॥

ननु किमिदमौत्सुक्यलक्षणं सिद्धे नास्तीत्यत आह।

**न चैतत्तस्य भगवत आकालं तथावस्थितेः ॥ ६२ ॥**

इति ॥ न च नैवैतदर्थान्तरप्राप्तिलक्षणमनन्तरोक्तं तस्य सिद्धस्य भगवतः। आकालं सर्वमप्यागामिनं कालं यावत्तथावस्थितेः प्रथमसमयादारभ्य तथा तेनैव प्रथमसमयसंपन्नेनैकेन निष्ठितार्थत्वलक्षणेन स्वरूपेणावस्थानात् ॥

एतदपि कुत इत्याह।

**कर्मक्षयाविशेषात् ॥ ६३ ॥**

१ C omits हि।

इति ॥ कर्मक्षयस्य कार्त्स्न्येन सिद्धत्वप्रथमक्षण एव, संजातस्य सर्वक्षणेष्वविशेषादभेदात् ॥

एवं सति यत्सिद्धं तदाह।

इति निरुपमसुखसिद्धिः ॥ ६४ ॥

इति ॥ इत्येवमौत्सुक्यात्यन्तिकनिवृत्तेर्निरुपमसुखसिद्धिः सिद्धानां श्रद्धेया ॥

अथोपसंहरन्नाह।

सज्ज्ञानवह्निना जीवो दग्ध्वा कर्मेन्धनं भुवि।
सद्ब्रह्मादिपदैर्गीतं स याति परमं पदम् ॥ ६५ ॥

इति ॥ सज्ज्ञानवह्निना शुक्लध्यानलक्षणज्वलज्ज्वलनेन करणभूतेन जीवो भव्यजन्तुविशेषो दग्ध्वा प्रलयमानीय कर्मेन्धनं भवोपग्राहिकर्मलक्षणं भुवि मनुष्यक्षेत्रलक्षणायाम्। किमित्याह। सद्ब्रह्मादिपदैः सद्भिः सुन्दरैर्ब्रह्मादिपदैर्ब्रह्मलोकाग्रादिभिर्ध्वनिभिर्गीतं शब्दितं स आराधितशुद्धसाधुधर्मो जीवो याति प्रतिपद्यते परमं पदमिति ॥

न च वक्तव्यम् अकर्मणः कथं गतिरित्याह।

पूर्वावेधवशादेव तत्स्वभावत्वतस्तथा।
अनन्तवीर्ययुक्तत्वात्समयेनानुगुण्यतः ॥ ६६ ॥

इति ॥ पूर्वावेधवशात्पूर्वसंसारावस्थायां य आवेध आवेशो गमनस्य तस्य वशात्तस्मात्। एव इत्यवधारणे। तत्स्वभावत्वतः स ऊर्ध्वगमनलक्षणो बन्धनमुक्तत्वेनैरण्डबीजस्येव स्वभावो

यस्य स तथा तद्भावस्तत्त्वं तस्मात् । तथा इति हेत्वन्तरसमुच्चये । अनन्तवीर्ययुक्तत्वादपारसामर्थ्यसंपन्नत्वात्समयेनैकेनानुगुण्यतः शैलेश्यवस्थावष्टब्धक्षेत्रमपेक्ष्य समश्रेणितया । परमं पदं याति इत्यनुवर्तत इति ॥

**स तत्र दुःखविरहादत्यन्तसुखसंगतः ।**
**तिष्ठत्ययोगो योगीन्द्रवन्द्यस्त्रिजगतीश्वरः ॥ ९७ ॥**

इति ॥ सोऽनन्तरोक्तो जीवस्तत्र सिद्धिक्षेत्रे दुःखविरहाच्छारीरमानसबाधावैधुर्यात् । किमित्याह अत्यन्तसुखसंगतः आत्यन्तिकैकान्तिकशर्मसागरोदरमध्यमग्नः तिष्ठत्ययोगः मनोवाक्कायव्यापारविकलो योगीन्द्रवन्द्यो योगिप्रधानमाननीयः । अत एव त्रिजगतीश्वरो द्रव्यभावापेक्षया सर्वलोकोपरिभागवर्तितया जगत्त्रयपरमेश्वर इति ॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुप्रकरणवृत्तौ विशेषतो धर्मफलविधिरष्टमोऽध्यायः समाप्तः ॥

माविःकर्तुमुदारतां निजधियो वाचां न वा चातुरी-
मन्येनापि च कारणेन न कृता वृत्तिर्मयासौ परम् ।
तत्त्वाभ्यासरसादुपात्तसुकृतोऽन्यत्रापि जन्मन्यहं
सर्वादीनवहानितोऽमलमना भूयासमुच्चैरिति ॥

इति श्रीमुनिचन्द्रसूरिविरचिता धर्मबिन्दुप्रकरणवृत्तिः समाप्ता ॥

प्रत्यक्षरं निरूप्यास्या ग्रन्थमानं विनिश्चितम् ।
अनुष्टुभां सहस्राणि त्रीणि पूर्णानि बुध्यताम् ॥

## GLOSSARY OF PECULIAR WORDS.

[Roman figures refer to numbers of Chapters and other figures to numbers of *Sūtras*.]

अणुव्रत III. 11, 19.
अतिचार III. 23-4, 39; VI. 54.
अनभिनिवेश I. 59.
अपवर्ग II. 77; III. 93.
अप्रतिबद्ध V. 55.
अभिग्रह V. 83.
अमङ्गल VII. 14.
आक्षेपणी II. 13.
आघात V. 16.
ईर्या V. 14.
उपधि V. 53.
कष II. 37-8.
क्षपकश्रेणि VIII. 8.
गुणव्रत III. 20.
ग्रैवेयक VII. 39.
चारित्री VI. 82.
छेद II. 39.
तत्त्व II. 12.
ताप II. 40.
तीर्थंकरत्व VIII. 1-2, 5.
देवसौख्य VII. 3.
निदान V. 61.
निदान VI. 63.
निर्वाण VIII. 30.
निषद्या V. 45.
प्रणीत V. 49.
प्ररूपणा II. 18, 37, 70.
प्रशस्ति II. 28.
प्रातिहार्य VII. 20.
भावप्रतिपत्ति II. 16.
भावयति VI. 73.
भावशुद्धि IV. 40.
भावसन्निपात VIII. 10.
लब्धि VI. 5, 15.
विकथा V. 27.
शिक्षापद III. 21.
शिवसौख्य VII. 3.
शील IV. 43-4.
सम्यग्दर्शन III. 10.
संलेखना V. 86, 88.
संहनन V, 87.
सामायिक VI. 204.

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

With the issue of this Notice all previous prices and price-lists are cancelled.

CALCUTTA,
*1st January*, 1940.

The publications or information about them are obtainable from the Royal Asiatic Society of Bengal, No. 1, Park Street, Calcutta, or from the Society's Agents:—

MESSRS. LUZAC & CO., 46, Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13, Rue Jacob, Paris, VIe.

BUCHHANDLUNG OTTO HARRASSOWITZ, 14, Querstrasse, Leipzig.

MESSRS. THACKER, SPINK & CO., LD., 3, Esplanade East, Calcutta.

MESSRS. THE MOORE COTTERELL SUBSCRIPTION AGENCIES, New York.

*Residents of Europe should order from the Agents.*

When ordering direct from the Society the following rules should be observed:—

Orders should be addressed to the Royal Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Royal Asiatic Society of Bengal".

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India, books are supplied by V.-P.P.

